नविकासख्वास्यप्रसारणयोः ॥ ३. १. ५२ ॥

गमेः कालहरणे ॥ ३. १. ५३ ॥

नु[१] प्रच्छः ॥ ३. १. ५४ ॥

क्रीडोऽनुपरिभ्यां च ॥ ३. १. ५५ ॥

समोऽकूजने ॥ ३. १. ५६ ॥

शकेः सनो जिज्ञासायाम् ॥ ३. १. ५७ ॥

अवस्करः ॥ ३. १. ५८ ॥

हञो गतं ताच्छील्ये ॥ ३. १. ५९ ॥

आशिषि नाथः ॥ ३. १. ६० ॥

शपः शपथे ॥ ३. १. ६१ ॥

स्थः प्रतिज्ञानिर्णयप्रकाशनेषु ॥ ३. १. ६२ ॥

समवप्रविभ्यश्च ॥ ३. १. ६३ ॥

उदोनूर्ध्वचेष्टायाम् ॥ ३. १. ६४ ॥

उपाद्देव[२]पूजासङ्गतिकरणमित्रकरणेषु ॥ ३. १. ६५ ॥

पथिकर्तृकात्[४] ॥ ३. १. ६६ ॥

मन्त्रकरणात् ॥ ३. १. ६७ ॥

वा लिप्सायाम् ॥ ३. १. ६८ ॥

अकर्मकात् ॥ ३. १ ६९ ॥

समोगमृच्छिपृच्छि[३]स्वृश्रुवेत्यर्तिदृशिभ्यः ॥ ३. १. ७० ॥

उपसर्गादस्यत्यूहिभ्यां वा ॥ ३. १. ७१ ॥

आङो यमहनः स्वाङ्गकर्मकाच्च ॥ ३. १. ७२ ॥

उद्विभ्यां तपः ॥ ३. १. ७३ ॥

तपः कर्मकाच्च ॥ ३. १. ७४ ॥

निसमुपविभ्यो ह्वः ॥ ३. १. ७५ ॥

स्पर्धायामाङः ॥ ३. १. ७६ ॥

सूचनावक्षेपणसेवासाहसप्रतियत्नप्रकथनोपयोगेषु कृञः ॥ ३. १. ७७ ॥

अधेः प्रसहने ॥ ३. १. ७८ ॥

१. A. नुपृच्छः

२. A. उपादेव

३. A omits पृच्छि

४. A. This is written as two different sūtras.

वेः शब्दकर्मणः ॥ ३. १. ७९ ॥

अकर्मकात् ॥ ३. १. ८० ॥

पूजोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः ॥ ३. १. ८१ ॥

कर्तृस्थामूर्तकर्मकाच्च ॥ ३. १. ८२ ॥

अप्रतिबन्धोत्साहतायनेषु क्रमः ॥ ३. १. ८३ ॥

उपपराभ्याम् ॥ ३. १. ८४ ॥

आङो ज्योतिरुद्गमने ॥ ३. १. ८५ ॥

वेः पादविहरणे ॥ ३. १. ८६ ॥

प्रोपाभ्यामारम्भे ॥ ३. १. ८७ ॥

अनुपसर्गाद्वा ॥ ३. १. ८८ ॥

अपह्नवे ज्ञः ॥ ३. १. ८९ ॥

अकर्मकाच्च ॥ ३. १. ९० ॥

संप्रतिभ्यामनाध्याने ॥ ३. १. ९१ ॥

भासनोपसान्त्वनज्ञानयत्नोपमन्त्रणेषु वदः ॥ ३. १. ९२ ॥

अनुसंभ्यामकर्मकात् ॥ ३. १. ९३ ॥

विमतौ ॥ ३. १. ९४ ॥

व्यक्तवाचां सहोक्तौ ॥ ३. १. ९५ ॥

तयोर्वा ॥ ३. १. ९६ ॥

अवाद्गिरः ॥ ३. १. ९७ ॥

समः प्रतिज्ञायाम् ॥ ३. १. ९८ ॥

[1]स्रुजः श्रद्धावपि ॥ ३ १. ९९ ॥

उदश्चरः सकर्मकात् ॥ ३. १. १०० ॥

समस्तृतीयायुक्तात् ॥ ३. १. १०१ ॥

दाणः सा चेच्चतुर्थ्यर्थे ॥ ३. १. १०२ ॥

उपाद्यमः स्वीकारे ॥ ३. १. १०३ ॥

आमः कृञः प्राग्वत् ॥ ३. १. १०४ ॥

[2]सनः ॥ ३. १. १०५ ॥

१. A. स्रुःश्र-

२. A. This and the next are written as one sūtra.

स्मृदृशिभ्याम् ॥ ३. १. १०६ ॥

अनोनोर्ज्ञः ॥ ३. १. १०७ ॥

श्रुवोऽनाङ्‌प्रतेः ॥ ३. १. १०८ ॥

शदेर्शिति ॥ ३. १. १०९ ॥

मृङो लुङ्लिङोश्च ॥ ३. १. ११० ॥

उपसर्गादजाद्यन्ताद्युजेरयज्ञपात्रेषु ॥ ३. १. १११ ॥

समः क्ष्णुवः ॥ ३. १. ११२ ॥

भुनक्तेरनवने ॥ ३. १. ११३ ॥

णेरणौ यत्कर्मणौ चेत्स कर्तानाध्याने ॥ ३. १. ११४ ॥

भीस्मिभ्यां हेतोस्तदर्थे ॥ ३. १. ११५ ॥

गृधिवञ्चिभ्यां प्रलम्भने ॥ ३. १. ११६ ॥

लियः पूजाभिभवयोश्च ॥ ३. १. ११७ ॥

मिथ्योपपदात् कृञोऽभ्यासे ॥ ३. १. ११८ ॥

[1]फलवति ॥ ३. १. ११९ ॥

पाठे विभाषितात् ॥ ३. १. १२० ॥

[2]ञितः ॥ ३. १. १२१ ॥

अपवदः ॥ ३. १. १२२ ॥

समुदाङ्भ्यो यमेरग्रन्थे[3] ॥ ३. १. १२३ ॥

शब्दान्तरगतौ वा ॥ ३. १. १२४ ॥

णिजर्थे च ॥ ३. १. १२५ ॥

यजेर्नित्यम् ॥ ३. १. १२६ ॥

न धातूपपदसंसर्गसामान्योक्तौ ॥ ३. १. १२७ ॥

अनुपराभ्यां कृञः ॥ ३. १. १२८ ॥

अभिप्रत्यतिभ्यः क्षिपः ॥ ३. १. १२९ ॥

प्राद्वहः ॥ ३. १. १३० ॥

परेर्मृषश्च ॥ ३. १. १३१ ॥

१. A. This and the next are written as one sūtra.

२. A omits this sūtra.

३. A adds here a separate sūtra अनुपसर्गात् ज्ञः



L

रमेर्व्याङ्भ्यां च ॥ ३. १. १३२ ॥

उपात् ॥ ३. १. १३३ ॥

अकर्मकाद्वा ॥ ३. १. १३४ ॥

अणौ चित्तवत् कर्तृकाण्णेः ॥ ३. १. १३५ ॥

चलनाहारार्थात् ॥ ३. १. १३६ ॥

प्रुद्रुस्रुबुधयुधेङ्नशाजनः ॥ ३. १. १३७ ॥

न पादमायमायसपरिमुहार्तिरुचिनृतिधेड्द्वसः ॥ ३. १. १३८ ॥

वाक्यषः ॥ ३. १. १३९ ॥

द्युद्भ्यो लुङि ॥ ३. १. १४० ॥

वृद्भ्यः स्यसनोः ॥ ३. १. १४१ ॥

लुटि च कृपः ॥ ३. १. १४२ ॥

शेषात्परस्मैपदानि ॥ ३. १. १४३ ॥

यङ्लुकः शब्लुक्च ॥ ३. १. १४४ ॥

समानाधिकरणे युष्मद्यप्रयुज्यमानेऽपि मध्यमः ॥ ३. १. १४५ ॥

प्रहासे च मन्योपपदान्मन्यतेरुत्तम एकवच्च ॥ ३. १. १४६ ॥

अस्मद्युत्तमः ॥ ३. १. १४७ ॥

शेषे प्रथमः ॥ ३. १. १४८ ॥

एकद्विबहुष्वेकवचनद्विवचनबहुवचनानि ॥ ३. १. १४९ ॥

जात्याख्यायामेकस्मिन् बहुवचनमसंख्याप्रयोगे वा ॥ ३. १. १५० ॥

अस्मदो द्वयोश्चाविशेषणे ॥ ३. १. १५१ ॥

युष्मदः पूजायाम् ॥ ३. १. १५२ ॥

अन्येभ्योऽपि दृश्यते ॥ ३. १. १५३ ॥

फल्गुनीप्रोष्ठपदाविशाखादिभ्यो नक्षत्रे ॥ ३. १. १५४ ॥

तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् ॥ ३. १. १५५ ॥

प्रातिपदिकात् स्वौजसमौट्छष्टाभ्यांभिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यस्ङसोसां-ङ्योस्सुप् ॥ ३. १. १५६ ॥

१. A. गौरर्थात्

२. A. This and the next sūtra are written as one.

३. A. तेस्तूत्तम

४. A adds a separate sūtra क्वचिद्विवचनं च

५. A. साङ्योः

अतो भिस ऐस् ॥ ३. १. १५७ ॥

नेदमदसोऽकात् ॥ ३. १. १५८ ॥

टाङसोरिनस्यौ ॥ ३. १. १५९ ॥

ङेङस्योर्यातौ ॥ ३. १. १६० ॥

सर्वनाम्नः स्मैस्मातौ ॥ ३. १. १६१ ॥

ङेः स्मिन् ॥ ३. १. १६२ ॥

जसश्शी ॥ ३. १. १६३ ॥

आदामः साम् ॥ ३. १. १६४ ॥

नान्यच्च संज्ञोपसर्जनात् ॥ ३. १. १६५ ॥

तृतीयासमासवाक्ययोः ॥ ३. १. १६६ ॥

द्वन्द्वे च ॥ ३. १. १६७ ॥

शीवा[1] ॥ ३. १. १६८ ॥

प्रथमचरमतयायाल्पार्धनेमकतिपयेभ्यः[2] ॥ ३. १. १६९ ॥

पूर्वादिभ्यो नवभ्यः स्मात्स्मिनौ च ॥ ३. १. १७० ॥

स्मै च तृतीयात् ॥ ३. १. १७१ ॥

आप औतः शी ॥ ३. १. १७२ ॥

नपुंसकात् ॥ ३. १. १७३ ॥

जस्सशोः शिः ॥ ३. १. १७४ ॥

अष्टाभ्य औश् ॥ ३. १. १७५ ॥

ष्णस्संख्याया लुक् ॥ ३. १. १७६ ॥

कतेः ॥ ३. १. १७७ ॥

स्वमोर्नपुंसकात् ॥ ३. १. १७८ ॥

अतोऽम् ॥ ३. १. १७९ ॥

इतरादिभ्यः पञ्चभ्यो नेकतरातः ॥ ३. १. १८० ॥

युष्मदस्मद्भ्यां ङसोऽश्[3] ॥ ३. १. १८१ ॥

ङे सुटोऽम् ॥ ३. १. १८२ ॥

शसो नः ॥ ३. १. १८३ ॥

१. A. शिवा

२. A. तथाल्पा-

३. A. This and the following two sūtras are omitted.

भ्यसो भ्यम् ॥ ३. १. १८४ ॥

पञ्चम्या अत् ॥ ३. १. १८५ ॥

ङसेश्च ॥ ३. १. १८६ ॥

आम आकम् ॥ ३. १. १८७ ॥

ह्रस्वापो नुट् ॥ ३. १. १८८ ॥

स्त्रीयूभ्याम् ॥ ३. १. १८९ ॥

इयुवुस्थानिभ्यां वा ॥ ३. १. १९० ॥

नित्यं स्त्रियाः ॥ ३. १. १९१ ॥

संख्याया अनतः ॥ ३. १. १९२ ॥

त्रेस्त्रयश्च ॥ ३. १. १९३ ॥

सुपो लुगैकार्थ्ये ॥ ३. १. १९४ ॥

[1]अनुपसर्जनाव्ययात् ॥ ३. १. १९५ ॥

[2]नाव्ययीभावादतोऽपञ्चम्यास्त्वम् ॥ ३. १. १९६ ॥

तृतीयासप्तम्योर्वा ॥ ३. १. १९७ ॥

नित्यमृ[3]ध्यर्थनदीसंख्यावयवात् सप्तम्याः ॥ ३. १. १९८ ॥

कर्मणि द्वितीया ॥ ३. १. १९९ ॥

समयानिकषाहाधिगन्तरान्तरेणयेनतेनयुक्तात् ॥ ३. १. २०० ॥

द्वित्वेऽभ्यादिभिः ॥ ३. १. २०१ ॥

सर्वाभिपर्युभयेभ्यस्तसा ॥ ३. १. २०२ ॥

[4]एनपा ॥ ३. १. २०३ ॥

कर्मप्रवचनीयैः ॥ ३. १. २०४ ॥

सप्तम्याधिक्यस्वाम्ययोः ॥ ३. १. २०५ ॥

पञ्चम्य[5]पाङ्भ्याम् ॥ ३. १. २०६ ॥

परिणा वर्जने ॥ ३. १. २०७ ॥

प्रतिनिधिप्रतिदानयोः ॥ ३. १. २०८ ॥

कालाध्वभ्यां कारकमध्ये [6]च सप्तमी च ॥ ३. १. २०९ ॥

१. B. Here is a lacuna.

२. B. Here is a lacuna.

३. A. मृध्वर्थ.

४. A. उएनपा.

५. A. म्यावाङ्भ्याम्.

६. A omits च

द्वितीयात्यन्तसंयोगे ॥ ३. १. २१० ॥

अपवर्गे तृतीया ॥ ३. १. २११ ॥

कर्तृकरणयोश्च ॥ ३. १. २१२ ॥

प्रकृतिप्रायगोत्रनामजातिजानुपुमात्मादिभ्यो गम्यमानक्रियायाः ॥ ३. १. २१३ ॥

न्यक्षकात्स्न्यादिभ्यः क्रियाविशेषणे ॥ ३. १. २१४ ॥

सुखदुःखादिभ्यो वा ॥ ३. १. २१५ ॥

समविषमादिभ्योऽधिकरणे ॥ ३. १. २१६ ॥

द्विद्रोणपञ्चकादिभ्यः कर्मणि वीप्सायाम् ॥ ३. १. २१७ ॥

संज्ञश्च ॥ ३. १. २१८ ॥

अशिष्टव्यवहारे संयच्छतेः संप्रदाने ॥ ३. १. २१९ ॥

सहार्थयोगे ॥ ३. १. २२० ॥

अर्थार्थिपूर्वापरकलहनिपुणमिश्रश्लक्ष्णोनार्थे[1] ॥ ३. १. २२१ ॥

इत्थंभूतलक्षणात् ॥ ३. १. २२२ ॥

अङ्गाद्विकृतात्तद्विकारेणाङ्गिवचने ॥ ३. १. २२३ ॥

हेतौ ॥ ३. १. २२४ ॥

ऋणे पञ्चमी ॥ ३. १. २२५ ॥

गुणे वा ॥ ३. १. २२६ ॥

न[2] स्त्रियामनुपलब्धादिभ्यः ॥ ३. १. २२७ ॥

षष्ठी हेतोः प्रयोगे ॥ ३. १. २२८ ॥

पर्यायाणां चा[3]द्वितीयाः सर्वेषामभ्यः ॥ ३. १. २२९ ॥

चतुर्थी संप्रदाने ॥ ३. १. २३० ॥

परिक्रियः करणे वा । ३. १. २३१ ॥

कॢप्त्यर्थकर्तरि विकारे ॥ ३. १. २३२ ॥

उत्पातेन ज्ञाप्यमाने ॥ ३. १. २३३ ॥

तादर्थ्ये ॥ ३. १. २३४ ॥

तुमर्थाच्च भाववचनात् ॥ ३. १. २३५ ॥

तुमुनोऽप्रयुज्यमानस्य कर्मणि ॥ ३. १. २३६ ॥

१. A. नार्थैः

२. A. न स्त्र्यामनुपलब्ध्यादिभ्यः

३. A omits च।

गत्यर्थानां चेष्टायामनास्थिताध्वनि वा ॥ ३. १. २३७ ॥

मन्यतेः प्रतिकृष्य कुत्सायामुपमानेभ्यः ॥ ३. १. २३८ ॥

ननावन्नकाकशुकसृगालेभ्यः ॥ ३. १. २३९ ॥

नमःस्वस्तिस्वाहास्वधालंवषट्पर्यायैश्चतुर्थ्यर्थैः ॥ ३. १. २४० ॥

अपादाने पञ्चमी ॥ ३. १. २४१ ॥

ल्यब्लोपे कर्माधिकरणयोः ॥ ३. १. २४२ ॥

प्रश्नाख्यानयोश्च ॥ ३. १. २४३ ॥

प्रभृत्यन्यारादितरदिक्छब्दाञ्चूत्तरपदाजाहियोगे ॥ ३. १. २४४ ॥

ऋते द्वितीया च ॥ ३. १. २४५ ॥

विना तृतीया च ॥ ३. १. २४६ ॥

[1]पृथङ्नानाभ्याम् ॥ ३. १. २४७ ॥

स्तोकाल्पकृच्छ्रकतिपयेभ्योऽसत्वार्थेभ्यः करणे ॥ ३. १. २४८ ॥

कालाध्वपरिच्छेदमूलात्पञ्चमी ॥ ३. १. २४९ ॥

तेन योगोऽकालात्सप्तमी ॥ ३. १. २५० ॥

अध्वनः प्रथमा च ॥ ३. १. २५१ ॥

षष्ठ्यतसर्थैः ॥ ३. १. २५२ ॥

दूरान्तिकार्थबहिर्भिः पञ्चमी च ॥ ३. १. २५३ ॥

दूरान्तिकार्थेभ्योऽसत्त्ववचनेभ्यो द्वितीयातृतीयासप्तम्यश्च ॥ ३. १. २५४ ॥

अधिकरणे सप्तमी ॥ ३. १. २५५ ॥

क्तस्येन्विषयस्य कर्मणि ॥ ३. १. २५६ ॥

निमित्तात्कर्मसंयोगे ॥ ३. १. २५७ ॥

अप्रत्यादिष्वसाधुना ॥ ३. १. २५८ ॥

[2]साधुना च ॥ ३. १. २५९ ॥

निपुणेन चार्चायाम् ॥ ३. १. २६० ॥

क्रियार्हेभ्यः कारकत्वे ॥ ३. १. २६१ ॥

क्रियानर्हेभ्यश्चाकारकत्वे ॥ ३. १. २६२ ॥

तद्विपर्यासे च ॥ ३. १. २६३ ॥

१. A. This and the next sūtra are written as one.　　२. A. सापुना च.

यस्य च भावेन भावलक्षणम् ॥ ३. १. २६४ ॥

षष्ठी चानादरे ॥ ३. १. २६५ ॥

स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च ॥ ३. १. २६६ ॥

आयुक्तकुशलाभ्यामासेवायाम् ॥ ३. १. २६७ ॥

यतो निर्धारणे ॥ ३. १. २६८ ॥

पञ्चमी विभक्तात् ॥ ३. १. २६९ ॥

सप्तमी चाधिकेन भूयसः ॥ ३. १. २७० ॥

तृतीयाल्पीयसः ॥ ३. १. २७१ ॥

प्रसितोत्सुकाभ्यां अधिकरणे वा ॥ ३. १. २७२ ॥

नक्षत्राच्च लुपि ॥ ३. १. २७३ ॥

अर्थमात्रे प्रथमा ॥ ३. १. २७४ ॥

संबोधने च ॥ ३. १. २७५ ॥

षष्ठी शेषे ॥ ३. १. २७६ ॥

स्मृत्यर्थदयेशां कर्मणि ॥ ३. १. २७७ ॥

कृञः [1]प्रतियत्ने ॥ ३. १. २७८ ॥

रुजार्थानां भावकर्तृकाणाम् ॥ ३. १. २७९ ॥

न ज्वरिसन्ताप्योः ॥ ३. १. २८० ॥

आशिषि नाथः ॥ ३. १. २८१ ॥

जासिनाटक्राथिपिषां[2] हिंसायाम् ॥ ३. १. २८२ ॥

हनः प्रनिभ्याम् ॥ ३. १. २८३ ॥

व्यपहृपणोः विनिमये ॥ ३. १. २८४ ॥

द्यूते च ॥ ३. १. २८५ ॥

[3]दिवस्तदर्थस्य ॥ ३. १. २८६ ॥

वोपसर्गात् ॥ ३. १. २८७॥

[4]ज्ञोऽविदर्थस्य करणे ॥ ३. १. २८८ ॥

कृत्वोऽर्थप्रयोगे कालेभ्योऽधिकरणे ॥ ३. १. २८९ ॥

१. A. प्रति प्रतियत्ने

२. A. पिषामहिंसायाम्.

३. A. This and the next sūtra are written as one.

४. A. ज्ञो-

प्रतिपदषष्ठ्याः पूर्णो विधिः ॥ ३. १. २९० ॥

कर्तृकर्मणोः कृति ॥ ३. १. २९१ ॥

उभयहेतावस्त्र्यकाकारे कर्तरि वा ॥ ३. १. २९२ ॥

[1]द्विषः शतरि ॥ ३. १. २९३ ॥

नलादेशतृन्नुदन्ताव्ययकिकखलर्थेषु ॥ ३. १. २९४ ॥

अकर्मेरुकाञि ॥ ३. १. २९५ ॥

अमत्यार्थाद्यधिकरणे निष्ठायाम् ॥ ३. १. २९६ ॥

भावे वा ॥ ३. १. २९७ ॥

अके भविष्यति ॥ ३. १. २९८ ॥

इन्याधमर्ण्ये च ॥ ३. १. २९९ ॥

कृत्येषु कर्तरि वा ॥ ३. १ ३०० ॥

नोभयप्राप्तौ ॥ ३. १. ३०१ ॥

तुल्यार्थैरतुलोपमाभ्यां तृतीया च ॥ ३. १. ३०२ ॥

हितसुखाभ्यां चतुर्थी च ॥ ३. १. ३०३ ॥

आशिष्यायुष्यभद्रार्थकुशलार्थैश्च ॥ ३. १. ३०४ ॥

इति श्रीसरस्वतीकण्ठाभरणनाम्नि व्याकरणे
तृतीयस्याध्यायस्य प्रथमः पादः
समाप्तः

---

१. A omits this sūtra.

२. A. This and the next sūtra are written as one.

३. A. अन्या.

## अथ द्वितीयः पादः

सुप्सुपा सहैकार्थीभावे समासः ॥ ३. २. १ ॥[1]
विरूपद्यादीनि गुणविशेषणतायाम् ॥ ३. २. २ ॥[2]
काष्ठादीनि क्रियाविशेषणतायाम् ॥ ३. २. ३ ॥
सर्वचर्मीयश्वोदशैकादशमाशब्दोर्ध्वमुहूर्तोर्ध्वदेहोर्ध्वैन्द्रमकृतपूर्वादयः तद्धिते ॥ ३. २. ४ ॥[3]
काकतालादय इवार्थे ॥ ३. २. ५ ॥
इवेन विभक्त्यलोपश्च ॥ ३. २. ६ ॥
भूतपूर्वादयः ॥ ३. २. ७ ॥
अव्ययीभावः ॥ ३. २. ८ ॥
अव्ययं विभक्त्यर्थे ॥ ३. २. ९ ॥
समीपसमृद्ध्योश्च ॥ ३. २. १० ॥
असमृद्ध्यर्थाभावात्ययासंप्रतिषु ॥ ३. २. ११ ॥
ख्यातिपश्चादर्थयोः ॥ ३. २. १२ ॥
योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यसदृशेषु ॥ ३. २. १३ ॥
यौगपद्यानुपूर्व्यसंपत्तिसाकल्यान्तवचनेषु ॥ ३. २. १४ ॥
यथा न सादृश्ये ॥ ३. २. १५ ॥
यावदियत्त्वे ॥ ३. २. १६ ॥
प्रतिना मात्रार्थे ॥ ३. २. १७ ॥
संख्याक्षशलाकाः परिणा द्यूतेऽन्यथावृत्तौ ॥ ३. २. १८ ॥
पर्यपाङ्बहिरञ्चवः पञ्चम्या वा ॥ ३. २. १९ ॥[4][5]
लक्षणेनाभिप्रती आभिमुख्ये ॥ ३. २. २० ॥
अनुः सामीप्यायामयोः ॥ ३. २. २१ ॥

१. A. This is written as three different sūtras.
२. A. तायाः
३. A. देहोन्द्र.
४. A. पर्यवाङ्
५. A omits वा.



M

तिष्ठद्गुवहद्गायतीगवानि कालविशेषे न चान्यसमासः ॥ ३. २. २२ ॥

लूनलूयमानपूतपूयमाना यवेन न च व्यतिरेकविभक्तिः ॥ ३. २. २३ ॥

खलेसंहृतसंह्रियमाणा बुसेन च ॥ ३. २. २४ ॥

सुविनिदुरपरायती पापपुण्यानि समया ॥ ३. २. २५ ॥

समं भूमिपदातिभ्यामन्यपदार्थे ॥ ३. २. २६ ॥

प्रोहरथमृगदक्षिणाभिः ॥ ३. २. २७ ॥

संप्रत्यसंप्रत्यप्रदक्षिणानि वर्तमानावर्तमानवामेषु ॥ ३. २. २८ ॥

पारे मध्येऽग्रेऽन्तः षष्ठ्या वा ॥ ३. २. २९ ॥

संख्या वंश्येन ॥ ३. २. ३० ॥

नदीभिस्समाहारे ॥ ३. २. ३१ ॥

अन्यपदार्थैः संज्ञायाम् ॥ ३. २. ३२ ॥

तत्पुरुषः ॥ ३. २. ३३ ॥

द्वितीयाश्रितातीतपतितगतात्यस्तगमिगामिबुभुक्ष्वादिभिः ॥ ३. २. ३४ ॥

प्राप्तापन्नाभ्यां प्राप्तापन्नौ च द्वितीयया पुंवच्च ॥ ३. २. ३५ ॥

स्वयं सामी क्तेन ॥ ३. २. ३६ ॥

खट्वा क्षेपे ॥ ३. २. ३७ ॥

कालाः ॥ ३. २. ३८ ॥

अत्यन्तसंयोगे ॥ ३. २. ३९ ॥

तृतीया तत्कृतार्थेन गुणवचनेन ॥ ३. २. ४० ॥

अर्थादिसदृशसमतुल्याधिकैश्च ॥ ३. २. ४१ ॥

अर्धं चतसृभिः ॥ ३. २. ४२ ॥

एकं न विंशत्यादिभिः ॥ ३. २. ४३ ॥

कर्तृकरणे कृता बहुलम् ॥ ३. २. ४४ ॥

कृत्यैरधिकार्थवचने ॥ ३. २. ४५ ॥

१. A. भवद्गायति.
२. A. लुङ्
३. A. This and the next sūtra are written together.
४. A omits अवर्तमान
५. A adds तौ च
६. A. This and the next sūtra are written together.
७. A. अर्द्धं
८. A. This and the next sūtra are written together.

भक्ष्यान्नपानपात्रैर्मिश्रीकरणव्यञ्जनयुग्यपूरणानि ॥ ३. २. ४६ ॥

चतुर्थी यता ॥ ३. २. ४७ ॥

सुखहिताभ्याम् ॥ ३. २. ४८ ॥

तादर्थ्ये प्रकृत्या ॥ ३. २. ४९ ॥

बलिरक्षितघासखुराविधादिभिश्च ॥ ३. २. ५० ॥

नित्यमर्थेनेदमर्थे ॥ ३. २. ५१ ॥

पञ्चमीभीतभीतिभीभयभीरुभीलुकजुगुप्सुभिः ॥ ३. २. ५२ ॥

अपेतापोढनिर्गतमुक्तपतितत्रस्तैरसर्वा[1] सा ॥ ३. २. ५३ ॥

स्तोकाल्पान्तिकाभ्याशदूरार्थ[2]कृच्छ्राणि क्तेन ॥ ३. २. ५४ ॥

शतसहस्रौ परेण ॥ ३. २. ५५ ॥

सप्तमीसिद्धशुष्कपक्वबन्धादिभिः ॥ ३. २. ५६ ॥

शौण्डधूर्तकितवव्या[3]डसंवीतपटुपण्डितकुशलनिपुणचपलान्तराधिभिः प्रसक्ताद्यप्रयोगे ॥ ३. २. ५७ ॥

ध्वाङ्क्षकाकवायसबकादिभिः क्षेपे ॥ ३. २. ५८ ॥

सिंहव्याघ्रवासवयुधिष्ठिरादिभिः पूजायाम् ॥ ३. २. ५९ ॥

यतावश्यके ॥ ३. २. ६० ॥

संज्ञायाम् ॥ ३. २. ६१ ॥

ऋणमधमोत्तमाभ्याम् ॥ ३. २. ६२ ॥

क्तेनाहोरात्रावयवाः ॥ ३. २. ६३ ॥

तत्र ॥ ३. २. ६४ ॥

सगतिकारकेणापि क्षेपे ॥ ३. २. ६५ ॥

[4]पात्रमवधारणे समितबहुलाभ्यां न चान्यसमासः ॥ ३. २. ६६ ॥

गेहेगोष्ठौ शूरक्ष्वे[5]डिनर्दिविजितिव्याडपटुपण्डितप्रगल्भैः ॥ ३. २. ६७ ॥

उदुम्बरः कृमिमशकाभ्यामुपमायाम् ॥ ३. २. ६८ ॥

अवटकूपौ कच्छपमण्डूकाभ्याम् ॥ ३. २. ६९ ॥

नगरं काकादिभिः ॥ ३. २. ७० ॥

गेहेमेहिपिण्डीशूरौ निरीहताभ्याम् ॥ ३. २. ७१ ॥

१. A. सर्वे.

२. A. स्तोकान्तिकदूरार्थ-

३. A. व्याघ.

४. A. This is written as two sūtras.

५. A. क्ष्वेडी.

पितरि शूरमातरि पुरुषौक्षियायाम् ॥ ३. २. ७२ ॥

गर्भः सुहिततृप्तदृप्तैरनौचित्ये ॥ ३. २. ७३ ॥

कर्णघिरिटिरिचुरुचुराभ्याम् ॥ ३. २. ७४ ॥

विशेषणं विशेष्येण समानाधिकरणेन ॥ ३. २. ७५ ॥

सर्वैकजरत्पुराणनवकेवलपूर्वापरप्रथमचरमजघन्यसमानमध्यमावराश्च ॥ ३. २. ७६ ॥

पूर्वकालोऽपरकालेन ॥ ३. २. ७७ ॥

दिक्संख्ये संज्ञायाम् ॥ ३. २. ७८ ॥

तद्धितार्थोत्तरपदसमाहारे च ॥ ३. २. ७९ ॥

न मत्वर्थे ॥ ३. २. ८० ॥

उपमानानि सामान्यवचनैः ॥ ३. २. ८१ ॥

उपमेयानि व्याघ्रसिंहर्षभपुण्डरीकपत्रपल्लवकिसलयेन्दुचन्द्रादिभिः सामान्याप्रयोगे ॥ ३. २. ८२ ॥

कुत्सितानि स्वार्थवचनैः खसूचीखेटदुर्दुरूट[१]चेलमुवहलकजालमापशद्कोण्डस्पृष्ट[२]धृष्टधूर्तकितवादिभिः ॥ ३. २. ८३ ॥

पापाणकहतदग्धादीनि कुत्सितैः ॥ ३. २. ८४ ॥

सन्महत्परमोत्तमोत्कृष्टपुमांसपूज्यमानैः ॥ ३. २. ८५ ॥

वृन्दारकनागकुञ्जरव्याघ्रसिंहशार्दूलवृषभर्षभपुङ्गवादिभिः पूज्यमानम् ॥३.२.८६॥

पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैः[३][४] जातिः ॥ ३. २. ८७ ॥

प्रशंसावचनैः मतल्लिकामचर्चिकाप्रकाण्डोद्धतल्लजकपादमिश्रपाशहस्तभित्तिस्थलपाल्यादिभिः ॥ ३. २. ८८ ॥

चतुष्पादो गर्भिण्या ॥ ३. २. ८९ ॥

कृत्यतुल्याख्यान्यजात्या ॥ ३. २. ९० ॥

जातिर्जात्या ॥ ३. २. ९१ ॥

१. A. दुरूट

२. A. काण्डपृष्ठस्पृष्ट-

३. A. वचनैश्च. The further portion is treated as a separate sūtra.

४. A adds युवाखलतिपलितवलिनजरद्भिः

वर्णो वर्णेन ॥ ३. २. ९२ ॥

कुमारश्रमणाप्रव्रजिताबन्धकीकुलटागर्भिणीतापसीदास्यध्यापकाभिरूपक-
पण्डितकुशलनिपुणचपलपटुमृदुभिः ॥ ३. २. ९३ ॥

क्तेन नञ्विशिष्टेनानञ् ॥ ३. २. ९४ ॥

[1]कृतापकृतभुक्ताभुक्तपीतविपीगतप्रत्यागतयातानुयातक्रयाक्रयिकापुटापुटिका-
फलाफलिकामानोन्मानिका[2]ः ॥ ३. २. ९५ ॥

कतरकतमौ जातिपरिप्रश्ने ॥ ३. २. ९६ ॥

किं क्षेपे ॥ ३. २. ९७ ॥

किंशुक[3]किंशुलुककिंपुरुषकिन्नरकिंशल्ककिन्दासादयः संज्ञायाम् ॥ ३. २. ९८ ॥

श्रोण्यूकपूगकुन्दमराशिनिचयरा[4]शिविशिष्टनिर्धनेन्द्रदेवमु[5]ण्डश्रमणभूतवदान्या-
ध्यापकब्राह्मणक्षत्रियपटुपण्डितकुशलचपलनिपुणाश्चव्यर्थे कृतमतामितो-
कभूतसमाज्ञाताख्या[6]तसंभाविताभितावधारितावकल्पितकलितनिराकृतो-
पकृतापकृतोदाहृतोदीरितोदितदृष्टविश्रुतादिभिः ॥ ३. २. ९९ ॥

शाकपार्थिवजातौल्वलिकुतपसौश्रुतघृतरौड्योदनपाणिन्याणिमाण्डव्यबलाका-
कौशिकवि[7]दर्भिकौण्डिन्यपरशुरामादयः प्रियादिलोपे ॥ ३. २. १०० ॥

अधिकान्ता संख्यासंख्ययाधिकलोपश्च ॥ ३. २. १०१ ॥

भागांशादिभिः पूरणान्ता लुक् च वा ॥ ३. २. १०२ ॥

मयूरच्छात्रौ व्यंसके[8]नोपमायां न चा[9]न्यसमासः ॥ ३. २. १०३ ॥

कम्बोजयवनौ मुण्डेन ॥ ३. २. १०४ ॥

एहीडायवाभ्यामन्यपदार्थे नपुंसकत्वे च ॥ ३. २. १०५ ॥

अपेहि च वाणिजस्वागतद्वितीयविघसप्रघसादिभिः क्रि[10]यायाम् ॥ ३. २. १०६ ॥

प्रेहि स्वागतवाणिजाभ्याम् ॥ ३. २. १०७ ॥

प्रोह कटकर्दमाभ्यां द्वितीया ॥ ३. २. १०८ ॥

[11]कुन्धिभिन्ध्युत्तमाविचक्षपलवणचूडादिभिः ॥ ३. २. १०९ ॥

१. A. कृताकृत.
२. A adds च.
३. A. किंशुक.
४. A omits राशि
५. A. कण्ड
६. A. म्नाता.
७. A. This portion is written as a separate sūtra.
८. A. नोपया-
९. A. चानेन.
१०. A. This portion is written as a separate sūtra.
११. A. तुन्धिभिन्धुद्ध-

आहर चेलवसने वनिताभिः ॥ ३. २. ११० ॥

आख्यातमाख्यातेन सातत्ये ॥ ३. २. १११ ॥

उद्धरोत्सृजावसृजाभ्याम् ॥ ३. २. ११२ ॥

पचपतवर्पा[1]न्युदस्तैर्नैः ॥ ३. २. ११३ ॥

उन्मृजावमृजने ॥ ३. २. ११४ ॥

इहद्वितीयेहपञ्चम्येहिरेयाहिराहोपुरुषिकाहंपूर्विकाहंप्रथमिकामहमहमिकावि-
चप्रचनिश्च[2]प्रेचादयः ॥ ३. २. ११५ ॥

हि कर्मणा बहुलमाभीक्ष्ण्ये कर्तरि ॥ ३. २. ११६ ॥

स्नात्वाकालकपीत्वास्थिरकभुक्त्वासुहितप्रोष्यपापीयउत्पत्यकालानिपत्यरोहि-
णीनिषद्यश्यामादयः ॥ ३. २. ११७ ॥

[3]आचोवचोच्चनीचाचपराचोच्चावचाकिंचनाकुतोभयानि ॥ ३. २. ११८ ॥

पूर्वापराधरोत्तराण्येकदेशिनैकाधिकरणेन ॥ ३. २. ११९ ॥

सायाह्नमध्याह्नमध्यन्दिनमध्यरात्रादयः ॥ ३. २. १२० ॥

अर्धं समविभागे वा ॥ ३. २. १२१ ॥

अर्धजरतीयार्धवैशसार्धोक्तादयः ॥ ३. २. १२२ ॥

द्वितीयतृतीयचतुर्थतुर्यतुरीयतुलाग्रादयश्च ॥ ३. २. १२३ ॥

कालाः परिणामिना ॥ ३. २. १२४ ॥

नञ् ॥ ३. २. १२५ ॥

शोभिहिताह्नमर्थालमर्थतद्धितैरसामर्थ्ये ॥ ३. २. १२६ ॥

असूर्यंपश्यापुनर्गेयाश्राद्धभोज्यलवणभोज्यादयश्च ॥ ३. २. १२७ ॥

ईषद्गुणेन ॥ ३. २. १२८ ॥

षष्ठी ॥ ३. २. १२९ ॥

कु[4]द्योगा ॥ ३. २. १३० ॥

याजकपूजकपरिचारकपरिवेषकस्नापकाध्यापकोत्सादकोन्मादकोद्वर्तकहोतृ-
[5]भर्त्रादयः ॥ ३. २. १३१ ॥

रथपत्ती गणकेन ॥ ३, २. १३२ ॥

१. A. पपान्युदनैर्नैः

२. A. This portion is written as part of the next sūtra.

३. A. अयोवचो

४. A. कुद्योगाकृति.

५. A. भर्त्रादिभिश्च

[1]गुणोत्तरेण तरलोपश्च ॥ ३. २. १३३ ॥

[2]सर्वपश्चात्प्रभृतीनि ॥ ३. २. १३४ ॥

तत्स्थैर्गुणैः ॥ ३. २. १३५ ॥

[3]न निर्धारणे ॥ ३. २. १३६ ॥

प्रतिपदविधाना ॥ ३. २. १३७ ॥

पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ॥ ३. २. १३८ ॥

मत्याद्यधिकरणक्तेन ॥ ३. २. १३९ ॥

कर्तृकर्महेतुनाकर्मणि ॥ ३. २. १४० ॥

कर्तर्येकेन ॥ ३. २. १४१ ॥

कर्तृतृजकाभ्याम् ॥ ३. २. १४२ ॥

नित्यं क्रीडाजीविकयोः ॥ ३. २. १४३ ॥

गतयः ॥ ३. २. १४४ ॥

कुः पापेषदर्थयोः ॥ ३. २. १४५ ॥

दुः निन्दाकृच्छ्रार्थयोः ॥ ३. २. १४६ ॥

स्वती पूजायाम् ॥ ३. २. १४७ ॥

अतिशयातिक्रमणयोश्च ॥ ३. २. १४८ ॥

आङीषदर्थाभिव्याप्त्योः ॥ ३. २. १४९ ॥

प्रादयो गताद्यर्थे प्रथमया ॥ ३. २. १५० ॥

अत्यादयः क्रान्ताद्यर्थे द्वितीयया ॥ ३. २. १५१ ॥

अवादयः कुष्टाद्यर्थे तृतीयया ॥ ३. २. १५२ ॥

पर्यादयो ग्लानाद्यर्थे चतुर्थ्या ॥ ३. २. १५३ ॥

निरादयः क्रान्ताद्यर्थे पञ्चम्या ॥ ३. २. १५४ ॥

अन्वादयस्तिङोदात्तवता गतिमता च ॥ ३. २. १५५ ॥

न कर्मप्रवचनीयाः ॥ ३. २. १५६ ॥

उपपदमतिङ् ॥ ३. २. १५७ ॥

नाव्ययेनानमा ॥ ३. २. १५८ ॥

१. A. गुणास्तरेण-

२. A. सवर्णश्चा-

३. A. This and the next sūtra are written together.

। च प्राक् खमुञः ॥ ३. २. १५९ ॥

।यादीनि क्त्वा च वा ॥ ३. २. १६० ॥

।र्यं प्रवृद्धादिभिः ॥ ३. २. १६१ ॥

इति श्रीसरस्वतीकण्ठाभरणनाम्नि व्याकरणे
तृतीयाध्यायस्य द्वितीयः पादः
समाप्तः

## अथ तृतीयः पादः

शेषो बहुव्रीहिः ॥ ३. ३. १ ॥

अदूराधिकासन्नाः संख्यया संख्येये ॥ ३. ३. २ ॥

बहुव्रीहिः सुजर्थे[1] ॥ ३. ३. ३ ॥

वार्थे च ॥ ३. ३. ४ ॥

अव्ययम् ॥ ३. ३. ५ ॥

अन्यपदार्थे ॥ ३. ३. ६ ॥

अस्तिक्षीरादयः ॥ ३. ३. ७ ॥

उपमानमुपमेयसरूपोत्तरपदलोपश्च ॥ ३. ३. ८ ॥

सप्तमीपूर्वं[2] समानाधिकरणम् ॥ ३. ३. ९ ॥

समुदायविकारषष्ठी समस्तम् ॥ ३. ३. १० ॥

प्रादिभ्यो धातुजं वाचोत्तरपदलोपः ॥ ३. ३. ११ ॥

नञोऽस्त्यर्थम् ॥ ३. ३. १२ ॥

अनेकं मतुपोऽर्थे ॥ ३. ३. १३ ॥

कर्तृकर्मप्रवचनमप्रथमायाः ॥ ३. ३. १४ ॥

दिङ्नामान्यन्तराले ॥ ३. ३. १५ ॥

तत्र गृहीत्वा तेन प्रहृत्येति सरूपेऽधि[3] क्रियाव्यतिहारे ॥ ३. ३. १६ ॥

[4]सह तृतीयया तुल्यार्थयोगे ॥ ३. ३. १७ ॥

क्वचित्[5] विद्यमानार्थे ॥ ३. ३. १८ ॥

चार्थे युगपदधिकरणवचनतायां[6] द्वन्द्वः ॥ ३. ३. १९ ॥

दधिसर्पिर्मधूनि[7] पयोमधुसर्पिभिरितरेतरयोगे ॥ ३. ३. २० ॥

इध्मावागृचो बर्हिर्मनःसामभिः[8] ॥ ३. ३. २१ ॥

१. A. संख्या सुजर्थे.

२. A adds च

३. A. युधिक्रि This portion is written as a separate sūtra.

४. A. सह तृतीयां

५. A adds च

६. A. तायाः

७. A. धुनी

८. A. सामिभिः

आदिरवसानेन[1] ॥ ३. ३. २२ ॥

शुक्लः[2] कृष्णेन ॥ ३. ३. २३ ॥

श्रद्धा मेधया ॥ ३. ३. २४ ॥

मेधादीक्षाश्रुताध्ययनानि च तपसा ॥ ३. ३. २५ ॥

याज्याप्रवर्ग्योलूखलान्यनुवाक्योपसद्मुसलैः ॥ ३. ३. २६ ॥

हरिब्रह्मशिवस्कन्दपरिव्रज्याद्या वासवप्रजापतिवैश्रवणविशाखकौशिकादिभिः[3] ॥ ३. ३. २७ ॥

अधिकरणैतावत्त्वे ॥ ३. ३. २८ ॥

समीपे वा ॥ ३. ३. २९ ॥

संख्याविंशत्यादिभिः संख्यायां समाहारे ॥ ३. ३. ३० ॥

अनुवादे चरणाः स्थेणोर्लुङि[4] ॥ ३. ३. ३१ ॥

अनपुंसकान्यध्वर्युक्रतवः ॥ ३. ३. ३२ ॥

अध्ययनतः सन्निकृष्टानि ॥ ३. ३. ३३ ॥

अप्राणिजातयः ॥ ३. ३. ३४ ॥

नदीदेशनगराणि भिन्नलिङ्गानि ॥ ३. ३. ३५ ॥

नित्यवैराः[5] ॥ ३. ३. ३६ ॥

कारवः ॥ ३. ३. ३७ ॥

गवाश्वगवाविकगवैडकाजाविकाजैडकानि ॥ ३. ३. ३८ ॥

कुब्जवामनकुब्जकिरातपुत्रपौत्रश्वचण्डाल[6]स्त्रीकुमारदासीदासदासीमाणवको-[7] ष्ट्रखरोष्ट्रशशभागवतीभागवतानि ॥ ३. ३. ३९ ॥

शाटीप्रच्छदकुटीकुटमूत्रशकृन्मूत्रपुरीषयकृन्मेदोमांसशोणितदर्भशरदर्भपूतीका- र्जुनपुरुषतृणोलपानि ॥ ३. ३. ४० ॥

प्राणितूर्याङ्गानि ॥ ३. ३. ४१ ॥

१. A. This and the next sūtra are written together.

२. A. शुक्लकृष्णेन

३. A. This portion is written as a separate sūtra.

४. A. लुङि.

५. A. This and the next sūtra are written together.

६. A. This portion is written as a separate sūtra.

७. A. बकोष्ट्रशशभागवतानि

सेनाङ्गानि बहुत्वे ॥ ३. ३. ४२ ॥

क्षुद्रजन्तवः ॥ ३. ३. ४३ ॥

फलानि ॥ ३. ३. ४४ ॥

वा वृक्षमृगतृणधान्यशकुनिविशेषाः ॥ ३. ३. ४५ ॥

व्यञ्जनानि ॥ ३. ३. ४६ ॥

[१]विरोधीन्यद्रव्याणि ॥ ३. ३. ४७ ॥

शेषमुभयोः ॥ ३. ३. ४८ ॥

प्रायेण पूर्वपदार्थप्रधानोऽव्ययीभावः ॥ ३. ३. ४९ ॥

उत्तरपदार्थप्रधानस्तत्पुरुषः ॥ ३. ३. ५० ॥

अन्यपदार्थप्रधानो बहुव्रीहिः ॥ ३. ३. ५१ ॥

उभयपदार्थप्रधानो द्वन्द्वः ॥ ३. ३. ५२ ॥

कर्मधारये प्रधानोपसर्जनानां परं परं विप्रतिषेधे ॥ ३. ३. ५३ ॥

[२]मत्वर्थीयार्थकर्मधारयात् बहुव्रीहिः ॥ ३. ३. ५४ ॥

कदाचित्कर्मधारयः सर्वधनाद्यर्थः[३] ॥ ३. ३. ५५ ॥

पूर्वपदातिशय आतिशयिकात् बहुव्रीहिः सूक्ष्मतरवस्त्राद्यर्थः[४] ॥ ३. ३. ५६ ॥

उत्तरपदातिशय अतिशायिको बहुव्रीहिः बह्वाढ्यतराद्यर्थः ॥ ३. ३. ५७ ॥

उपसर्जनं पूर्वम् ॥ ३. ३. ५८ ॥

राजदन्तलिप्तवासितसिक्तसंमृष्टमृष्ट[५]लुञ्चितनग्नमुषितावक्लिन्नपक्वार्पितोप्तगाढाधमर्णोत्तमर्णपरश्शतपरःसहस्रादिषु परम् ॥ ३. ३. ५९ ॥

बिम्बोष्ठबिम्बाधरपुरुषोत्तमादिषु वा ॥ ३. ३. ६० ॥

इदु द्वन्द्वे ॥ ३. ३. ६१ ॥

न स्वातिश्चित्रायाः ॥ ३. ३. ६२ ॥

पतिर्भार्यायाः ॥ ३. ३. ६३ ॥

जायाया जं दं च वा ॥ ३. ३. ६४ ॥

पशुश्च पुत्रात् ॥ ३. ३. ६५ ॥

१. A. विरेभिन्य-

२. B. This and the following three sūtras are written as part of the commentary.

३. A. धान्यावलकः

४. A. सूक्ष्मतराद्यर्थः

५. A omits मृष्ट-

श्मश्रु केशात्[1] ॥ ३. ३. ६६ ॥

जानुबिन्दू[2] शिरसः ॥ ३. ३. ६७ ॥

सर्पिर्मधुद्दीर्घलघुगुणवृध्यादिषु वा ॥ ३. ३. ६८ ॥

अजाद्यदन्तम् ॥ ३. ३. ६९ ॥

न शूद्रार्यावन्त्यश्मकाविष्वक्सेनार्जुनादिषु ॥ ३. ३. ७० ॥

धर्मार्थकामार्थशब्दार्थाद्यन्ताग्नीन्द्रचन्द्रार्कादिषु वा ॥ ३. ३. ७१ ॥

अल्पाच्तरम् ॥ ३. ३. ७२ ॥

नोलूखलमुसलतण्डुलकिण्वचित्ररथवाह्लिकस्नातकराजन्याक्षिभ्रुवदारगवोशीरबीजादिषु ॥ ३. ३. ७३ ॥

समीरणाग्न्यादित्यचन्द्रपाणिनीयरौढीयादिषु[4] वा ॥ ३. ३. ७४ ॥

लघ्वक्षरम् ॥ ३. ३. ७५ ॥

न श्रद्धातपसादिषु ॥ ३. ३. ७६ ॥

शकृन्मूत्रकुशकाशादिषु[5] वा ॥ ३. ३. ७७ ॥

अभ्यर्हितम् ॥ ३. ३. ७८ ॥

न[6] नरनारायणादिषु ॥ ३. ३. ७९ ॥

तपःश्रुतादिषु वा ॥ ३. ३. ८० ॥

मासर्तुनक्षत्राण्यानुपूर्व्येण ॥ ३. ३. ८१ ॥

न पुष्यपुनर्वस्वादिषु ॥ ३. ३. ८२ ॥

वसन्तग्रीष्मादिषु वा ॥ ३. ३. ८३ ॥

ज्यायान् भ्रातृणाम् ॥ ३. ३. ८४ ॥

न पाण्डुधृतराष्ट्रादिषु ॥ ३. ३. ८५ ॥

भीमसेनार्जुनादिषु वा ॥ ३. ३. ८६ ॥

वर्णानां च ॥ ३. ३. ८७ ॥

बहुषूत्क्रमश्च ॥ ३. ३. ८८ ॥

संख्यानामल्पीयः[7] ॥ ३. ३. ८९ ॥

१. A omits this sūtra.

२. A. विरु

३. B. गोलूखल

४. A. रौडियादिषु.

५. A. कादिषु.

६. A omits न.

७. A. कल्पीयः

बहुव्रीहौ च ॥ ३. ३. ९० ॥

सर्वनाम च सर्वतः ॥ ३. ३. ९१ ॥

विशेषणम् ॥ ३. ३. ९२ ॥

प्रियो वा ॥ ३. ३. ९३ ॥

सप्तमी ॥ ३. ३. ९४ ॥

गड्वादिभ्यो वा ॥ ३. ३. ९५ ॥

नेन्द्वादिभ्यः ॥ ३. ३. ९६ ॥

प्रहरणेभ्यश्च ॥ ३. ३. ९७ ॥

क्तान्तं वा ॥ ३. ३. ९८ ॥

नित्यं शेषे ॥ ३. ३. ९९ ॥

आहिताग्निजात[1]पुत्रजातदन्तजातश्मश्रुपतिघृतपीततैलपीतमद्यपीतविषोढभार्या-
[2]गतार्थविच्छिन्नशीर्षादिषु वा ॥ ३. ३. १०० ॥

जातिकालसुखादिभ्यश्च ॥ ३. ३. १०१ ॥

कडारगडुलकाणखञ्जकुण्टकहोडखलतिगौरपिङ्गलवृद्धभिक्षु[3]कैवठरतनवः कर्मधा-
रये ॥ ३. ३. १०२ ॥

सरूपाणामेकशेष एकविभक्तौ ॥ ३. ३. १०३ ॥

स्वरभिन्नानां यस्योत्तरस्वरविधिः ॥ ३. ३. १०४ ॥

विरूपाणामप्येकार्थानाम् ॥ ३. ३. १०५ ॥

पौत्रादिजीवद्वंश्या[4]दिना तन्निमित्त एव चेद्विशेषः ॥ ३. ३. १०६ ॥

स्त्रीपुंवच्च ॥ ३. ३. १०७ ॥

पुमान् स्त्रिया ॥ ३. ३. १०८॥

ग्राम्यपशुसंघेष्वतरुणानेकशफेषु स्त्री ॥ ३. ३. १०९ ॥

नपुंसकमनपुंसकेनैकवच्चास्य वा ॥ ३. ३. ११० ॥

पितृश्वशुरौ मातृश्वश्रूभ्याम् ॥ ३. ३. १११ ॥

भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ॥ ३. ३. ११२ ॥

त्यदादीनि सर्वैर्नित्यम्[5] ॥ ३. ३. ११३ ॥

१. B omits जातपुत्र

२. A. गतार्थाछिन्न.

३. A. कबरे तनवः

४. A. दीनां

५. A. सर्वैस्त्यदादीनि

तेषामद्वन्द्वतत्पुरुषविशेषणानां पुंनपुंसकतो लिङ्गानि ॥ ३. ३. ११४ ॥

तेषां मिथो यत्परम्[1] ॥ ३. ३. ११५ ॥

कश्चित्पूर्वं च ॥ ३. ३. ११६ ॥

पुरुषाणां च ॥ ३. ३. ११७ ॥

अव्ययीभावो नपुंसकम् ॥ ३. ३. ११८ ॥

द्वन्द्वः समाहार एकवच्च ॥ ३. ३. ११९ ॥

द्विगुश्च ॥ ३. ३. १२० ॥

[2]अदन्तः स्त्री ॥ ३. ३. १२१ ॥

[3]पात्रपथ्युगभुवनाद्यन्तो नपुंसकम् ॥ ३. ३. १२२ ॥

[4]षष्ठ्याः कन्थोशीनरेषु तत्पुरुषः संज्ञायाम् ॥ ३. ३. १२३ ॥

उपज्ञोपक्रमं तदादित्वे ॥ ३. ३. १२४ ॥

ईश्वरार्थाद्राज्ञः सभा ॥ ३. ३. १२५ ॥

यक्षराक्षसपिशाचादिभ्यश्च[5] ॥ ३. ३. १२६ ॥

अशाला[6] ॥ ३. ३. १२७ ॥

सेना सुरा शाला निशा वा ॥ ३. ३. १२८ ॥

छाया ॥ ३. ३. १२९ ॥

नित्यं बाहुल्ये ॥ ३. ३. १३० ॥

पथोऽव्ययात् ॥ ३. ३. १३१ ॥

रात्राह्नाहाः पुंसि ॥ ३. ३. १३२ ॥

अहोऽसु[7]दिनपुण्याभ्याम् ॥ ३. ३. १३३ ॥

नपुंसके चार्धर्चाष्टापदसुवर्णशतमानकार्षापणवारबाणगन्धमादनान्धकारापराह्णापूर्वोपवासनिर्यासविमानप्रग्रीवप्रवालवाजपेयराजसूयप्रतिसरादि[8]षु ॥ ३. ३. १३४ ॥

परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ॥ ३. ३. १३५ ॥

एकविंशत्यादीनां च ॥ ३. ३ १३६ ॥

१. A. परः

२. A. अदन्तस्त्रीवाबन्तः

३. A adds अनो नलोपश्च before this as a separate sūtra.

४. A. This is written as three different sūtras.

५. A omits च.

६. A. अशालायाः

७. A. सदि.

८. A. सरादयः

न प्राप्तापन्नगत्यलंपूर्वाणाम् ॥ ३. ३. १३७ ॥

पूर्ववदश्ववडवौ ॥ ३. ३. १३८ ॥

ह्रस्वो नपुंसके प्रातिपदिकस्य ॥ ३. ३. १३९ ॥

गोरुपसर्जनस्यान्त्यस्य ॥ ३. ३. १४० ॥

टाबादीनाम् ॥ ३. ३. १४१ ॥

लुक्तद्धितलुक्यगोणीसूच्योः ॥ ३. ३. १४२ ॥

लुपि प्रकृतिवल्लिङ्गवचने ॥ ३. ३. १४३ ॥

विशेषणानां चाजातेः ॥ ३. ३. १४४ ॥

न मनुष्ये ॥ ३. ३. १४५ ॥

समास उत्तरपदस्य ॥ ३. ३. १४६ ॥

हरीतक्यादिषु व्यक्तिः ॥ ३. ३. १४७ ॥

खलतिकादिषु वचनम् ॥ ३. ३. १४८ ॥

इति श्रीसरस्वतीकण्ठाभरणनाम्नि व्याकरणे
तृतीयस्याध्यायस्य तृतीयः पादः
समाप्तः

---

१. A omits this sūtra.

## अथ चतुर्थः पादः

——:०:——

स्त्रियाम् ॥ ३. ४. १ ॥

अतष्टाप् ॥ ३. ४. २ ॥

अजैडककोकिलाश्वचटकमूषिकेभ्यः ॥ ३. ४. ३ ॥

वालहोडपाकवत्समन्दविलातेभ्यश्च ॥ ३. ४. ४ ॥

पूर्वापहानापरापहनसंप्रहानेभ्यो नस्य च णः ॥ ३. ४. ५ ॥

संभस्त्राजिनशणपिण्डेभ्यः फलात् ॥ ३. ४. ६ ॥

त्रेश्च ॥ ३. ४. ७ ॥

सत्प्राक्काण्डप्रान्तशतैकेभ्यः पुष्पात् ॥ ३. ४. ८ ॥

मूलान्नञः ॥ ३. ४. ९ ॥

शूद्राचामहत्पूर्वाज्जातिः ॥ ३. ४. १० ॥

कन्यकनिष्ठज्येष्ठमध्यममध्यममुग्धेभ्यः ॥ ३. ४. ११ ॥

कुङ् देविविड्भ्याम् ॥ ३. ४. १२ ॥

उष्णिहो वा ॥ ३. ४. १३ ॥

ऋचि पादः ॥ ३. ४. १४ ॥

ऋनो ङीप् ॥ ३. ४. १५ ॥

अधातोरुगितः ॥ ३. ४. १६ ॥

अञ्चः ॥ ३. ४. १७ ॥

अहशो वनो र च ॥ ३. ४. १८ ॥

बहुव्रीहेर्वा ॥ ३. ४. १९ ॥

पादः ॥ ३. ४. २० ॥

अनः ॥ ३. ४. २१ ॥

नित्यं संज्ञायाम् ॥ ३. ४. २२ ॥

ऊधसो नश्च ॥ ३. ४. २३ ॥

दाम्नः[1] संख्यादेः ॥ ३. ४. २४ ॥

१. A. नाम्नः

हायनाद्वयसि ॥ ३. ४. २५ ॥

नानुपधालोपिनः ॥ ३. ४. २६ ॥

[१]मनः ॥ ३. ४. २७ ॥

डाप् चोभ्याम् ॥ ३. ४. २८ ॥

न स्वसृदुहितृननान्दृयातृमातृतिसृचतसृपञ्चन्नादिभ्यः ॥ ३. ४. २० ॥

अनुपसर्जनादतः ॥ ३. ४. ३० ॥

टिड्ढाणञ्ठक्ठञ्नञ्स्नञ्कञ्क्करप्ख्युनः ॥ ३. ४. ३१ ॥

न लक्ष्यान्यागमटितः ॥ ३. ४. ३२ ॥

[२]यञोऽषावटात् ॥ ३. ४. ३३ ॥

सर्वतः ष्फो वा ॥ ३. ४. ३४ ॥

लोहितादिभ्यश्शाकलपर्[३]यन्तेभ्यो नित्यम् ॥ ३. ४. ३५ ॥

कौरव्यादसु[४]रिमाण्डूकेभ्यो ङित् ॥ ३. ४. ३६ ॥

वयस्यचरमे ॥ ३. ४. ३७ ॥

कुमारादनूढायां च ॥ ३. ४. ३८ ॥

[५]द्विगोः ॥ ३. ४. ३९ ॥

परिमाणात् तद्धितलुक्यसंख्याकालबिस्ताचितकम्बल्यात् ॥ ३. ४. ४० ॥

काण्डादक्षेत्रे ॥ ३. ४. ४१ ॥

पुरुषाद्वा ॥ ३. ४. ४२ ॥

केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजेभ्यः संज्ञायाम् ॥ ३.४.४३॥

[६]नुक्चान्तर्वतो गर्भिण्याम् ॥ ३. ४. ४४ ॥

पत्विवतो भार्यायाम् ॥ ३. ४. ४५ ॥

पत्युर्न ऊढायाम् ॥ ३. ४. ४६ ॥

सपूर्वस्य वा ॥ ३. ४. ४७ ॥

[७]बहुव्रीहौ ॥ ३. ४. ४८ ॥

१. A. This and the next sūtra are written together.

२. A. यञोषा.

३. A omits पर्य.

४. A. सुमाण्डू-

५. A. This and the next sūtra are written together.

६. B. नुक्य-

७. A. This and the next sūtra are written together.

समानैकवीरपिण्डभ्रातृपुत्रेभ्यः ॥ ३. ४. ४९ ॥

श्येतैतहरितरोहिताद्वातश्च नः ॥ ३. ४. ५० ॥

क्नोऽसितपलिताभ्याम् ॥ ३. ४. ५१ ॥

षितो ङिष् ॥ ३. ४. ५२ ॥

गौरशबलकल्माषसारङ्गपिशङ्गहरिणपाण्डरामरसुन्दरविकलनिष्कलपुष्कले - भ्यः ॥ ३. ४. ५३ ॥

बृहन्महत्स्वरश्चौरतापसदासचेटविटभिक्षुकबन्धकपुत्रगायत्रेभ्यः ॥ ३. ४. ५४ ॥

मत्स्यमनुष्यमुकयहयगवयर्ष्यद्रुणौकणक्रोष्टुतक्षश्वानडुद्भ्यः ॥ ३. ४. ५५ ॥

भौरिकिभौलिकिभौलिङ्ग्यौद्वाहमान्यालम्ब्यालब्ध्यालाक्षिसौधर्मायस्थूणारद्गौ - तमापञ्चिकेभ्यः ॥ ३. ४. ५६ ॥

दोटनाटनटपाटसूपाटमूलाटपेटपटपटलपुटकुटफाण्टसेभ्यः ॥ ३. ४. ५७ ॥

धातककेतकतर्कारशर्कारबदरकुवलवलामलकमालतवेतसातसाढकेभ्यः ॥ ३. ४. ५८ ॥

कदरकदलगुलूचवाकुचनाचमाचकुम्भकुसुम्भयूथमेथकरीरसल्लकवल्लकेभ्यः ॥ ३. ४. ५९ ॥

पिप्पलहरीतककोशातकशमतमसुषवशृङ्गभृङ्गबिम्बवर्बरशष्कुण्डापिण्डमण्ड - लेभ्यः ॥ ३. ४. ६० ॥

यूपसूपशूर्पसूर्महमठपिठरोदरगुदपृथिवखारकाकणेभ्यः ॥ ३. ४. ६१ ॥

द्रोणबृसासन्दालिन्दकन्दलदेहलशष्कुलशचसूचमञ्जरालजवैजयन्तेभ्यः ॥ ३. ४. ६२ ॥

काकादनगवादनतेजनरजनदोहनशातनपातनसेचनकार्दनपाटनपेषणास्तरणा - स्थानाधिकरणप्रत्यवरोहणाग्रहायणेभ्यः ॥ ३. ४. ६३ ॥

एषणात्करणे ॥ ३. ४. ६४ ॥

१. A. गवयर्श्य-
२. A. नड्दुभ्यः
३. A. मौलिङ्ग्योद्राहनालङ्घ्यापनलब्ध्या-
४. A. मापक्केभ्यः
C. मापञ्चिकेभ्यः
५. A. मूलाटयपोट-
६. A. सुष्वव-
७. A. दण्डबबर-
८. A omits मण्डलेभ्यः
९. A omits this sūtra.
१०. A. शवादन.
११. A. सचन
१२. A. पूरणा-

[1]सुमङ्गलात् संज्ञायाम् ॥ ३. ४. ६५ ॥

पीनाच्च ॥ ३. ४. ६६ ॥

रेवद्रोहिणाभ्यां नक्षत्रे ॥ ३. ४. ६७ ॥

कटाच्छ्रो[2]ण्याम् ॥ ३. ४. ६८ ॥

कूश्माण्डयादयश्च ॥ ३. ४. ६९ ॥

भाजगोणनागस्थलकुण्डकालकुशकामुककबरेभ्यः पक्वावपनस्थूलाकृत्रिमामत्र-
कृष्णायसीरिरंसुकेशवेशेषु ॥ ३. ४. ७० ॥

जानपदाद्वृत्तौ ॥ ३. ४. ७१ ॥

नीलात्प्राण्योषध्योः ॥ ३. ४. ७२ ॥

[3]वा संज्ञायाम् ॥ ३. ४. ७३ ॥

शोणचण्डारालकमलकृपणविकटविशालविशङ्कटभरुजध्वजकल्याणोदारपुरा-
[4]णाहन्भ्यः ॥ ३. ४. ७४ ॥

चान्द्र[5]भागादनद्याम् ॥ ३. ४. ७५ ॥

एरक्तिनः ॥ ३. ४. ७६ ॥

पद्धतेश्च ॥ ३. ४, ७७ ॥

शक्तेः शस्त्रे ॥ ३. ४. ७८ ॥

ओर्गुणादखरुसंयोगोपधात् ॥ ३. ४. ७९ ॥

पुंनाम्नः पुं[6]योगादपालकान्तात् ॥ ३. ४. ८० ॥

पूतक्रतुवृषाकप्यग्निकुसितकुसीदनामै च ॥ ३. ४. ८१ ॥

मनोरौ च वा ॥ ३. ४. ८२ ॥

सूर्या देवतायाम् ॥ ३. ४. ८३ ॥

इन्द्रवरुणभवशर्वरुद्रमृडाचार्याणामानुक् च ॥ ३. ४. ८४ ॥

मातुलोपाध्यायाभ्यां वा ॥ ३. ४. ८५ ॥

आर्यक्षत्रियाभ्यां चापुंयोगे ॥ ३. ४. ८६ ॥

हिमारण्याभ्यां महत्वे ॥ ३. ४. ८७ ॥

यवाद्दोषे ॥ ३. ४. ८८ ॥

१. B. सुमङ्गलाच्च

२. A. श्रोम्याम्.

३. A. पा-

४. A. हम्भ्यः

५. A. भागा नद्याम्.
C. चन्द्रभागा-

६. A. This portion is written as a separate sūtra.

यवनाल्लिप्याम् ॥ ३. ४. ८९ ॥

क्रीतात्करणादेः ॥ ३. ४. ९० ॥

क्तादल्पोक्तौ ॥ ३. ४. ९१ ॥

स्वाङ्गादेरकृतमितजातप्रतिपन्नाद्बहुव्रीहेः ॥ ३. ४. ९२ ॥

पाणिगृहीत्यूढा[1] ॥ ३. ४. ९३ ॥

अनाच्छादनजात्यादेर्वा ॥ ३. ४. ९४ ॥

संज्ञायाम् ॥ ३. ४. ९५ ॥

स्वाङ्गादुपसर्जनादसंयोगोपधादबह्वचः ॥ ३. ४. ९६ ॥

नासिकोदरोष्ठजङ्घादन्तकर्णशृङ्गाङ्गगात्रकण्ठात् ॥ ३. ४. ९७ ॥

पुच्छात् ॥ ३. ४. ९८ ॥

कबरमणिविषशरादेः ॥ ३. ४. ९९ ॥

उपमानादेश्च ॥ ३. ४. १०० ॥

पक्षात् ॥ ३. ४. १०१ ॥

न क्रोडखुरगुदशफवालभालगलभगोखघोणादिभ्यः ॥ ३. ४. १०२ ॥

[2]सहनञ्विद्यमानादेः ॥ ३. ४. १०३ ॥

नखमुखात्संज्ञायाम् ॥ ३. ४. १०४ ॥

सख्यशिश्वी ॥ ३. ४. १०५ ॥

अस्त्रीविषयादयोपधाज्जातेः ॥ ३. ४. १०६ ॥

पाककर्णपुष्पफलमूलवालान्ताच्च ॥ ३. ४. १०७ ॥

इतो मनुष्यजातेः ॥ ३. ४. १०८ ॥

इञः ॥ ३. ४. १०९ ॥

ऊङुतः ॥ ३. ४. ११० ॥

बाह्वन्तात्कद्रुकमण्डलुभ्यः संज्ञायाम् ॥ ३. ४. १११ ॥

पङ्गोः ॥ ३. ४. ११२ ॥

श्वशुरस्योदन्तलोपश्च ॥ ३. ४. ११३ ॥

ऊरोरुपमान[3]संहितसहितसहसफवामलक्षणादेः ॥ ३. ४. ११४ ॥

अरज्ज्वादेरप्राणिनो वा ॥ ३. ४. ११५ ॥

१. A. गृहीतीरूढा.

२. A. सनञ्.

३. A. सिंहसिहितसहसफलामल-

अतो ङीन् ॥ ३. ४. ११६ ॥

शङ्गरुवहतुकपट्गुल्गुलुगोतमब्रह्मभ्योऽणः ॥ ३. ४. ११७ ॥

कमण्डलवीनिधिब्रह्मकृताशोकाकैकसीभ्यो ढकः ॥ ३. ४. ११८ ॥

मुञ्जवात्साभ्यां फकः ॥ ३. ४. ११९ ॥

शिबिकपिभ्यां ञ्यङः ॥ ३. ४. १२० ॥

अश्मरथाद्यञः ॥ ३. ४. १२१ ॥

आङ्पर्याङ्भ्यामीहेरिनः ॥ ३. ४. १२२ ॥

वतण्डारालचण्डालेभ्यः ॥ ३. ४. १२३ ॥

भोगवद्गौरिमतोः संज्ञायाम् ॥ ३. ४. १२४ ॥

नृनरयोः वृद्धिश्च ॥ ३. ४. १२५ ॥

यङश्चाप् ॥ ३. ४. १२६ ॥

यञश्चषावटात् ॥ ३. ४. १२७ ॥

यूनस्तिः ॥ ३. ४. १२८ ॥

वृद्धज्गुरूपान्तानार्षगोत्राणिओरन्त्यस्य ष्यङ् ॥ ३. ४. १२९ ॥

कुलाख्यानाम् ॥ ३. ४. १३० ॥

कौडिलाडिव्याड्यापक्षित्यापिशलिसौधातकिमौरिकिमौलिकिशाल्मलिका-
पिष्टलिदैवदत्त्यादीनाम् ॥ ३. ४ १३१ ॥

चौपयतचैकयतचैटयतबैल्वयतसैकयतानां च ॥ ३. ४. १३२ ॥

भोजस्य क्षत्रियायाम् ॥ ३. ४. १३३ ॥

सूतस्य युवत्याम् ॥ ३. ४. १३४ ॥

दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकण्ठेविद्धीनां वा ॥ ३. ४. १३५ ॥

इति श्रीसरस्वतीकण्ठाभरणनाम्नि व्याकरणे
तृतीयाध्यायस्य चतुर्थः पादः
समाप्तः

---

१. A. शृङ्ग-
C. सङ्गरु-

२. A. निति^ब्रह्म

३. A. मुञ्जवसाभ्यां
B. मुण्ड-

४. A. शवि.

५. मिमे-

६. A. वहात्.

७. A. This and the next sūtra are written together.

८. B breaks off from here to the end of the work.

## ॥ अथ चतुर्थोऽध्यायः ॥

---

प्राग्जितादण् ॥ ४. १. १ ॥

दित्यदित्यादित्ययमे[1]भ्यो ण्यः ॥ ४. १. २ ॥

पत्युत्तरपदाच्च[2] ॥ ४. १. ३ ॥

अश्वशतधनगणराष्ट्रकूल[3]गृहपशुधान्यधर्मधन्वन्सभाप्राणसेनाक्षेत्रा[4]दिपूर्वादण् ॥ ४. १. ४ ॥

अः स्थाम्नः ॥ ४. १. ५ ॥

लोम्नोऽपत्येषु ॥ ४. १. ६ ॥

पृथिव्या ञः[5] ॥ ४. १. ७ ॥

अञ्[6] ॥ ४. १. ८ ॥

उत्सोदपान[7]विकरविनदतरुणतलुनधेनुपीलुकुणसवर्णवृषदंश[8]भ्यः ॥ ४. १. ९ ॥

भरतकुरुसत्वतेन्द्रावसानजनपदपञ्चालोशीनरेभ्यः ॥ ४. १. १० ॥

त्रिष्टुबनुष्टुप्कुघुष्णिक्पङ्क्तिजगतीबृहतीभ्यः ॥ ४. १. ११ ॥

बृहन्महद्रथन्तरमध्यन्दिनभल्लकीयमहानदमहानसमहाप्राणेभ्यः ॥ ४. १. १२ ॥

बष्कयादसमासे ॥ ४. १. १३ ॥

उदस्थानाद्देशे ॥ ४. १. १४ ॥

ग्रीष्मादच्छन्दसि ॥ ४. १. १५ ॥

देवाद्यञ् च ॥ ४. १. १६ ॥

बहिषष्टीकक्[9] च ॥ ४. १. १७ ॥

द्विगोरनपत्येऽजादे[10]र्लुगद्विः ॥ ४. १. १८ ॥

१. C. यमाण्ण्यः

२. A omits this sūtra.

३. A. कुद्वय

४. C. क्षत्राधि-

५. C omits this sūtra.

६. C omits this sūtra.

७. A. उदकपानवकरण-

८. A. पृष्ठदंशेभ्यः

९. A. ष्ठिकक्

१०. A. This portion is written as a separate sūtra.

प्राग्वतेरङ्गिकलिभ्यां ढक् ॥ ४. १. १९ ॥

स्त्रीपुंसाभ्यां नञ्स्नञौ ॥ ४. १. २० ॥

भावे वा ॥ ४. १. २१ ॥

गोरचि यत् ॥ ४. १. २२ ॥

तस्यापत्यम् ॥ ४. १. २३ ॥

आद्यात् ॥ ४. १. २४ ॥

पौत्रादेरस्त्रियां गुर्वायत्ते ॥ ४. १. २५ ॥

अत इञ् ॥ ४. १. २६ ॥

प्रागणो[1] विदादिभ्यः शेषे ॥ ४. १. २७ ॥

उ[3]दङ्कादिभ्यश्च ॥ ४. १. २८ ॥

बाह्वपबाह्वपबिन्दुजधेनुचटाकुशिवाकुभ्यो गोत्रादिभ्यः ॥ ४. १. २९ ॥

वृकलाकुकलाच्चूडाबलाकाजङ्घाछगलाभगला[4]लहकाभुवकाधुवकासुषिकासुमित्रादुर्मित्राभ्यः ॥ ४. १. ३० ॥

युधिष्ठिरार्जुनरामसङ्कर्षणकृष्णगदप्रद्युम्नसाम्बसत्यकशूरासुराजीगर्तेभ्यः ॥ ४. १. ३१ ॥

सुधावत्पुष्पकरसदनुरहदनडुत्पाश्व[5]सेताष्टक्षेमवृद्धिमाषशराविशृङ्खलातोदिखरनादिभ्यः ॥ ४. १. ३२ ॥

[6]प्राकारनगराभ्यां मर्दिनः ॥ ४. १. ३३ ॥

इन्द्राग्निदेवेभ्यः शर्मणः ॥ ४. १. ३४ ॥

उदश्वः संज्ञायाम् ॥ ४. १. ३५ ॥

कुसुभ्यां नाम्नः ॥ ४. १. ३६ ॥

शिरोलोमभ्याम् ॥ ४. १. ३७ ॥

[7]संभूयाभ्यामितौजःशलङ्कूनां लोपश्च ॥ ४. १. ३८ ॥

व्याससुधातृवरुटनिषादचण्डालबि[8]म्बानामकङ् च ॥ ४. १. ३९ ॥

१. A. This portion is written as a separate sūtra.

२. A. प्रागणोऽश्व

३. A. उदकादि-

४. A. लभकाभ्रुवका-

५. A. सतावांष्ठ-

६. A. प्रगारनगराभ्यां मदिनः

७. A. संभूयाद्दोमितौजश्छलङ्कूनाम् ।

८. A. बिम्बादीनामकच

पुनर्भूपुत्रदुहितृननान्दृनिषादेभ्योऽनन्तरेञ् ॥ ४ १. ४० ॥

[1]परस्त्रियाः परशुश्च ॥ ४. १. ४१ ॥

बिदोर्वकश्यपकुशिकभरद्वाजोपमन्युकिलातविद[2]र्भविश्वानरार्ष्टिषेणेभ्यः पौत्रादौ ॥
४. १. ४२ ॥

ऋतभागहर्यश्वप्रियकापस्तम्बकुचवारशरद्वच्छुनकधेनुभ्यः ॥ ४. १. ४३ ॥

गोपवनशिग्रुबिन्दुभाजनाश्वावतानश्यामाकशम्बकश्यापर्णेभ्यः ॥ ४. १. ४४ ॥

हरितकिन्दासवह्यस्कार्कलूषवध्योगविष्णुवृद्धप्रतिबोधरथीतररथन्तरगविष्ठिर-
गविष्ठिलनिषादशम्बरमठर[3]सृदारुपृदाकुभ्यश्च ॥ ४. १. ४५ ॥

गर्गवत्सा[4]जव्याघ्रपात्[5]संकृतिप्राचीनयोगपुलस्तिरेभश[6]ंटशङ्खाग्निवेशेभ्यो यञ् ॥
४. १. ४६ ॥

धूमावटचमसनमसधनञ्जयतृक्षविश्वावसु[7]जरमाणकुरुकतानडुद्भ्यः ॥ ४. १. ४७ ॥

मनुमनायीसूनुस्रुकर्ष[8]र्कथकाक्षतरुक्षतलुक्षतण्डवतण्डकाबिकते[9]भ्यः ॥ ४. १. ४८ ॥

शकलकण्वगोकक्षागस्त्यकुण्डिनीयज्ञवक्र[10]पर्णवक्राभय[11]जातविरोहितवृषगणरह्न -
गण[12]शाण्डिलमुद्गलेभ्यः ॥ ४. १. ४९ ॥

मुसलोलूकजतुकर्णमन्त्रिताश्मरथशर्कराक्षपूतिमाषस्थूरारगतापिङ्गलताकृष्णगो-
लन्देभ्यः ॥ ४. १. ५० ॥

[13]भिषक्तितिक्षाभडितभण्डितचिकितेन्द्रहूदेवहूपिप्पलवेकलूबृहदग्निजमदग्निप -
राशरेभ्यः ॥ ४. १. ५१ ॥

दलभकुलटकुटीगुचणकचुलुकोजकर्कटालापिन्सवर्णसुवर्णसुलाभिन्द्रि[14]हृदादि -
भ्यः ॥ ४. १. ५२ ॥

त्राजादसमासे ॥ ४. १. ५३ ॥

मधोर्ब्राह्मणे ॥ ४. १. ५४ ॥

१. A. स्त्यापरशुक् च

२. A. दर्भेभ्यः

३ A. सदृकुपृषाकुभ्यः

४. C. वत्सव्याज

५. C. संस्कृति

६. A. सदसङ्ख्यानिवेशेभ्यः

७. A. नरमाण

८. A. कर्षकाक्षतरूक्ष

९. A. कर्तेभ्यः

१०. A and C. वर्णवल्क

११. A. भ्रय

१२. A. तण्डिल

१३. A. भिषकर्म-

१४. A. तृदा-

ब्रभ्रोः कौशिके ॥ ४. १. ५५ ॥

कवेराङ्गिरसे ॥ ४. १. ५६ ॥

बोधात् ॥ ४. १. ५७ ॥

वतण्डात् ॥ ४. १. ५८ ॥

स्त्रियां लुक् ॥ ४. १. ५९ ॥

अश्वाश्मशङ्खकुटपुटरोहिणखर्जूरपिण्डूरभडिलभण्डिलभडितभण्डितेभ्यः फञ् ॥ ४. १. ६० ॥

प्रहृतरामोदक्षान्तकुलकाशकालगोबाह्वार्कस्वनध्वनपादचक्रेभ्यः ॥ ४. १. ६१ ॥

ग्रीवाश्वविष्ठापविष्ठापविन्दागोमिन्वाग्मिन्श्यामधूमधूम्रवस्तविश्वानरविदेभ्यः ॥ ४. १. ६२ ॥

जडखडार्हग्रीष्मवीक्षविशम्पविशालगिरिचपलनमदासकानडुह्येभ्यः ॥ ४.१.६३ ॥

धन्यधर्मार्जुनबैल्योत्सातवकितवशूद्रखदिरसुमनोदुर्मनोभ्यः ॥ ४. १. ६४ ॥

जातात्पुंसि ॥ ४. १. ६५ ॥

शपभरद्वाजाभ्यामात्रेये ॥ ४. १. ६६ ॥

आत्रेयाद्भारद्वाजे ॥ ४. १. ६७ ॥

भर्गात् त्रैगर्ते ॥ ४. १. ६८ ॥

कुञ्जब्रध्नशङ्खभस्मगणलोमशठशाकशुण्डाशुभस्कन्दस्कम्भविशाभ्यः फ्यञ् ॥ ४. १. ६९ ॥

स्त्रीबहुषु फक् ॥ ४. १. ७० ॥

नडचरबकमुञ्जेतिकेतिशोपकलमकसप्तलवाजप्यतिकाग्निशर्मभ्यः ॥ ४.१.७१ ॥

वृषगणप्राणनरसायकदासकमित्रपिङ्गरपिङ्गलकिङ्करकिङ्कलकातरकातलेभ्यः ॥ ४. १. ७२ ॥

द्वीपाजकाश्यकाश्यपकाव्यामुष्यामित्रचित्रलिङ्गकुमारलोहदुर्गेभ्यः॥ ४. १. ७३ ॥

स्तम्बाग्रशिशपातृणशकटसुमतिमिमतच्छेजगन्धरयुगन्धरहंसकपञ्चालेभ्यः ॥ ४. १. ७४ ॥

१. C. रसः

२. A. This and the next sūtra are written as one sūtra.

३. A. डुहेभ्यः

४. A omits दुर्मनो

५. A. विपाद्भ्यः पञ्

६. A. प्राण.

७. A. कातमेभ्यः

८. A omits लोह.

९. A. सुमतममित-



P

दण्डिनृहस्तिनृचर्मसिन्सुकृत्यस्थिरकब्राह्मणाश्वचटकबदराध्वखरपकामुकेभ्यः ॥ ४. १. ७५ ॥

ब्रह्मदत्तोदुम्बरशणशोणाश्वबालिशभण्डपेभ्यश्च ॥ ४ १. ७६ ॥

कृष्णरणाभ्यां ब्राह्मणवसिष्ठयोः ॥ ४. १. ७७ ॥

शलङ्कुक्रोष्टोर्लोपश्च ॥ ४. १. ७८ ॥

हरितादिभ्योऽञः[1] ॥ ४. १. ७९ ॥

यञिञ्भ्याम् ॥ ४. १. ८० ॥

शरद्वच्छुनकदर्भेभ्यो भार्गववात्स्याग्रायणेषु ॥ ४. १. ८१ ॥

जीवन्तपर्वताभ्यां वा ॥ ४. १. ८२ ॥

द्रोणात्[2] ॥ ४. १. ८३ ॥

शिवप्रोष्ठप्रोष्ठिकचण्डजम्भकुठारानभिम्लानककुत्स्थोरलविरलपिष्गसुपिष्गेभ्यो-ऽण्[3][4] ॥ ४. १. ८४ ॥

पिटकपिटाकमृक्षाकवर्तनाक्षविरूपाक्षखदूरकरेखलेखसुखलेखनखञ्जनखञ्जखञ्जे-रमञ्जमिकेभ्यः[5] ॥ ४. १. ८५ ॥

पर्णकर्णकोहडकहोडककुभोर्णनाभनभागहेहयकुत्सवृष्णिकक्षीरहृदजलहृदेभ्यः ॥ ४. १. ८६ ॥

यस्कलह्यद्रुह्यायःस्थूणतृणकर्णभलन्दनकुरुपाण्डुवतण्डार्ष्टिषेणतृणतक्षन्भ्यः ॥ ४. १. ८७ ॥

गोपिकागोपालिकाकपिलिकाजगिलिकाबाधिरिकारोहितिकार्यश्वेतोत्क्षिपाव-र्षिकापृथेलासपत्नीभ्यः ॥ ४. १. ८८ ॥

भूमिभूरिमुनिसन्धिजरत्कारुकारुहस्तिपादकपिञ्जलकुण्डोपस्थब्रह्मगुप्तखर्जूर-कर्णमयूरकर्णेभ्यः ॥ ४. १. ८९ ॥

नैश्च[6] विश्रवसो विश्लोपश्च वा ॥ ४. १. ९० ॥

द्व्यचो[7] नद्याः ॥ ४. १. ९१ ॥

विपाशगङ्गाभ्याम् ॥ ४. १. ९२ ॥

१. C. ञः

२. A adds णः and reads the rest as a separate sūtra.

३. A. This and the next sūtra are read as one.

४. A. म्लानभूभूथोरलविरद्यपिष्ठसुपिष्टेभ्यो-ऽण्

५. A. मञ्जीरमञ्जकेभ्यः

६. A. णश्च

७. A. चाद्व्यचो

त्रिवेण्यास्त्रिविर्णं च ॥ ४. १. ९३ ॥

मानुष्याश्चावृद्धनाम्नः ॥ ४. १. ९४ ॥

कुञ्चकोकिलाभ्याम् ॥ ४. १. ९५ ॥

ऋषिकुरुवृष्ण्यन्धकेभ्यः ॥ ४. १. ९६ ॥

मातुरुत्संख्यासंभद्रपूर्वायाः ॥ ४. १. ९७ ॥

कन्यायाः कनीन च ॥ ४. १. ९८ ॥

शुङ्गछगलविकर्णेभ्यो भारद्वाजात्रेयवात्स्येषु ॥ ४. १. ९९ ॥

शाल्वापीलाभ्यां वा ॥ ४. १. १०० ॥

मण्डूकात् ढक् च ॥ ४. १. १०१ ॥

ङ्यावृङः ॥ ४. १. १०२ ॥

द्व्यचः ॥ ४. १. १०३ ॥

इतो निञः ॥ ४. १. १०४ ॥

शुभ्रविष्टपुरब्रह्मकृतशरद्धतशलाम्यलाणीवप्रवाहणभरतभरमकर्पूरेतरान्यतराजिराश्वतुदेगोदन्तेभ्यः ॥ ४. १. १०५ ॥

कुशाम्बविग्रविशशालूकदेवतरालीढसुदत्तसुदक्षवायुदत्ताकशापशकलखदूरशुकशुक्रोग्रजीवेभ्यः ॥ ४. १. १०६ ॥

कद्रुपाण्डुमृकण्डुयमष्टुमकष्टुकर्पूलेखाभ्रूशलाकाभ्रूशकुनिशकन्ध्यानिधिपरिधिविश्रयतिथ्यनुदष्टयजवस्तिभ्यः ॥ ४. १. १०७ ॥

गङ्गागोधाविधवाशलाकाकुमारिकाकिशोरिकाकुबेरिकाकाम्बिकाशोकाकृकसाकृकलासाखडोन्मत्तागन्धपिङ्गलाधर्मिणीरुक्मिणीरोहिणीभ्यः ॥ ४.१.१०८॥

श्वन्नश्मन्सुनामन्सुदामन्नरतिम्बलीवर्दिजिह्माशिन्दिष्सुवक्षोविमातृमृन्मृद्वादिभ्यः ॥ ४. १. १०९ ॥

लक्ष्मणश्यामयोर्वसिष्ठे ॥ ४. १. ११० ॥

बडवाया वृषे ॥ ४. १. १११ ॥

१. A. णश्च

२. A omits this word, and reads the further portion together with next sūtra as one.

३. A. संचापीलाभ्यां

४. A. शतद्वार

५. A. तुन्द

६. A. लवण.

विकर्णकुषीतकात् काश्यपे[1] ॥ ४. १. ११२ ॥

भ्रुवो वुक्[2] च ॥ ४. १. ११३ ॥

कल्याणीसुभगादुर्भगाबन्धकीजरतीबलीवर्दीज्येष्ठाकनिष्ठामध्यमापरस्त्र्यनुसृ-
ष्ट्यनुदृष्टीनामिनङ् च ॥ ४. १. ११४ ॥

कुलटाया[3] वा ॥ ४. १. ११५ ॥

चटकादैरक् ॥ ४. १. ११६ ॥

लुक् स्त्रियाम् ॥ ४. १. ११७ ॥

जाण्डापाण्डादारक्[4] ॥ ४. १. ११८ ॥

गोधाया ढक् च ॥ ४. १. ११९ ॥

अनियतपुंस्काङ्गहीनाभ्यो[5] वा ॥ ४. १. १२० ॥

भ्रातुर्व्यत् ॥ ४. १. १२१ ॥

व्यन् सपत्ने ॥ ४. १. १२२ ॥

छश्च ॥ ४. १. १२३ ॥

स्वसुः ॥ ४. १. १२४ ॥

पितृमात्रादेश्छण् ॥ ४. १. १२५ ॥

ढग्लोपश्च[6] ॥ ४. १. १२६ ॥

क्षत्राज्जातौ घः ॥ ४. १. १२७ ॥

राज्ञो यत् ॥ ४. १. १२८ ॥

श्वशुरात् ॥ ४. १. १२९ ॥

कुलाड्ढकञ् च[7] ॥ ४. १. १३० ॥

खः सपूर्वाच्च ॥ ४. १. १३१ ॥

दुष्कुलाड्ढग्वा ॥ ४. १. १३२ ॥

महाकुलाद[8]ञ्खञौ ॥ ४. १. १३३ ॥

चतुष्पाद्भ्यो ढञ् ॥ ४. १. १३४ ॥

गृष्टिहृष्टिहलिबलिविश्रिकुद्र्यजवस्तिमित्रयुभ्यः ॥ ४. १. १३५ ॥

१. A. This portion is written as a separate sūtra.

२. A. लुक्

३. A. This and the next sūtra are written as one.

४. A. जाण्टापाण्टा-

५. A. This and the next sūtra are written as one.

६. A. इग्लो-

७. A omits च

८. A. दखञौ

रेवतीकुक्कुटाक्षवृकबन्धिभ्यष्ठक्[1] ॥ ४. १. १३६ ॥
अश्वमणिद्वारेभ्यः पाल्याः ॥ ४. १. १३७ ॥
[2]श्वेतवृककर्णदण्डेभ्यो ग्राहात् ॥ ४. १. १३८ ॥
पौत्रादेः स्त्रियाः कुत्सिते णश्च ॥ ४. १. १३९ ॥
भगवित्तितार्णविन्दवाकशापेयेभ्यः[3] सौवीरेषु ठग्वा ॥ ४. १. १४० ॥
यामुन्दायनिसौयामायनिवार्ष्यायणिभ्यश्छश्च ॥ ४. १. १४१ ॥
फाण्टाहृतेर्णफिञौ ॥ ४. १. १४२ ॥
मिमतात् ॥ ४. १. १४३ ॥
कुरुशकन्धुशङ्कुकर्तृभर्तृपितृमद्राक्षक्षन्[4]कापिञ्जलादिधातकीन्द्रजालिदामोष्णीषिभ्यो ण्यः ॥ ४. १. १४४. ॥
कविमतिपीलाशलाकैरकेज्येह्रिकेशिनीभ्यः ॥ ४. १. १४५ ॥
[5]शुभ्राभ्रदभ्रमुरपुरकिशोरगर्गराजमारमद्रुषचपथद्दकेनवेनमूढकुडहृदिकशालीनेभ्यः ॥ ४. १. १४६ ॥
[6]कर्णरथपतिसत्यंवडसीवृहतीभ्यः कारात् ॥ ४. १. १४७ ॥
वान्तार्द्राभ्यां वृक्षात् ॥ ४. १. १४८ ॥
श्यावात् पुत्ररथाभ्याम् ॥ ४. १. १४९ ॥
शूर्पाच्च [7]नायात् ॥ ४. १. १५० ॥
विराजकादिञः ॥ ४. १. १५१ ॥
सम्राजः क्षत्रिये ॥ ४. १. १५२ ॥
वामरथवर्च्छ[8]कलादियञ्वत् स्वरवर्जम् ॥ ४. १. १५३ ॥

१. A. ष्ठन्
२. A. This and the next sūtra are omitted.
३. A. वृकर्णदण्डेवाशाकापायेभ्यः
४. A. तक्षन्...ण्यः is written as a separate sūtra.
५. A. This sūtra is written as two with the following differences in reading:-शुभ्राशुभ्रमुरपुरीकशोरगगराजरामरक् ॥ गुषचफद्दकेनवेनमूढकुट etc.
६. A adds at the beginning वो[वेना]च्छन्दस्योदन्ये-
७. A. गायात्
८. A omits शकल... सैन्धव ( ४. १. १५५. )

सेनान्तकारुलक्षणेभ्य इण् च ॥ ४. १. १५४ ॥

तिककितवसैन्धवशुभामित्रदेवरथनीडयक्षयसुन्दोरसारथ्यलङ्कवेभ्यः फिञ् ॥ ४. १. १५५ ॥

बालभीतग्राम्यरूप्यवरेण्योतथ्योदन्योरश्चन्द्रमस्सुयामन्लुपामन्ध्वजवङ्गेभ्यः ॥ ४. १. १५६ ॥

तैतिलजाजलक्षैजयतसैकयतचौपयतचैटयतौरसकौरव्यगौकक्ष्यशाक्यभौरिकिभौलिकेभ्यः ॥ ४. १. १५७ ॥

गङ्गासंज्ञोखाशिखावंह्यकारखल्वकाशल्यकालोमकावसुकुरुभ्यः ॥ ४. १. १५८ ॥

दगुकोसलकर्मारछागवृषेभ्यो युट्² च ॥ ४. १. १५९ ॥

द्व्यचोऽणः ॥ ४. १. १६० ॥

त्यदादिभ्यो वा ॥ ४. १. १६१ ॥

वृद्धादगोत्रात् ॥ ४. १. १६२ ॥

वाकिनगारे³धकार्कस्यकाकलङ्कचर्मिवर्मिभ्यः कुट्⁴ च ॥ ४. १. १६३ ॥

पुत्रान्ताद्वा ॥ ४. १. १६४ ॥

अवृद्धात् फिन् बहुलम् ॥ ४. १. १६५ ॥

मनोरण् ॥ ४. १. १६६ ॥

नॅ⁵श्राणः कुत्सायाम् ॥ ४. १. १६७ ॥

जातौ यत् षुक् च ॥ ४. १ १६८ ॥

अञ् ॥ ४. १. १६९ ॥

तुल्यनामभ्यः क्षत्रियजनपदेभ्यो राजनि च ॥ ४. १. १७० ॥

साल्वेयगान्धारिभ्यां च ॥ ४. १. १७१ ॥

वृ⁶द्धात् कोसलाजादाञ् ञ्यङ् ॥ ४. १. १७२ ॥

द्व्यच्मगधकलिङ्गशूरमसेभ्योऽण् ॥ ४. १. १७३ ॥

कुरुनादिभ्यो ण्यः ॥ ४. १. १७४ ॥

पाण्डोर्ड्यण् ॥ ४. १. १७५ ॥

१. A. ब्राह्मकाश्वल्काशल्यका
२. A. युक् च
३. A. गारेटकार्कस्यकालङ्कि
४. A. कुक्
५. C omits this sūtra.
६. A and C. वृद्धेत्

उदुम्बरति[1]लखलमद्रकारयुगन्धरभुलिङ्गशरदण्डप्रत्यग्रथकलकूटाश्मकेभ्य इञ् ॥ ४. १. १७६ ॥

कम्बोजमुरलकेरलचोलशकखसादिभ्यो लुक् ॥ ४. १. १७७ ॥

स्त्रियां कुरुकुन्त्यवन्तिभ्यः ॥ ४. १. १७८ ॥

अञणोरप्राच्यभर्गकरुषकेकयकश्मीरकौरव्यौरससाल्वसुस्थलेभ्यः[2] ॥ ४. १. १७९ ॥

अञादीनां[3]मस्त्रियां बहुषु ॥ ४. १. १८० ॥

यञञोरपुनर्भू[4]पर्शुपुत्रदुहितृननान्दृभ्यः ॥ ४. १. १८१ ॥

एकद्वयोः षष्ठीतत्पुरुषे वा ॥ ४. १. १८२ ॥

कौण्डिन्यस्य कुण्डिनच्च[5] ॥ ४. १. १८३ ॥

यस्कलभ्यद्रुह्यायस्थूणतृणकर्णभलन्दनमित्रयुखरपभडिलभण्डिलभडितभण्डितेभ्यः ॥ ४. १. १८४ ॥

सदामत्तकम्बलभारकर्णाटपिण्डीजङ्घ[6]बकसक्थरक्षोमुखजङ्घारथोत्काशकहमन्थकविषपुटेभ्यः ॥ ४. १. १८५ ॥

वर्षुकोपरिमेखलकडरकृषवटाकपुष्करसत्कुन्द्रिविश्रि[7]यजवास्तिभ्यः ॥ ४. १. १८६ ॥

क्रोष्टुः[8] पादमानाभ्याम् ॥ ४. १. १८७ ॥

शीर्षाच्च मायात् ॥ ४. १. १८८ ॥

अत्रिभृगुकुत्सवसिष्ठाङ्गिरोगोतमेभ्यः ॥ ४. १. १८९ ॥

अगस्त्यः[9] ॥ ४. १. १९० ॥

बह्वचः प्राच्यादिञः ॥ ४. १. १९१ ॥

उपकलमकभ्रष्टककपिष्ठलकृष्णाजिनकृष्णसुन्दरपिङ्गलकृष्णपिङ्गलकलशीकण्ठदामकण्ठजटिलकबधिरकेभ्यो वा ॥ ४. १. १९२ ॥

जन्तु[10]गडुकनिदाघापजग्धाडारकचडारकप्रतिलोमानुलोमप्रतानानुपदानाभिहितखरिजङ्घेभ्यः ॥ ४. १. १९३ ॥

१. A. उदुम्बरखदिरखल-

२. A adds साल्वांशेभ्यः

३. A. नां स्त्रियां

४. A. परस्त्रीपुत्र. This portion is written as a separate sūtra.

५. C. नाच्च

६. A. बचसक्थ

७. A. विश्रियज

८. A. क्रोष्टोःपाट-

९. A. अग्रस्तयः

१०. C omits this sūtra but a portion of the sūtra is referred to in the commentary.

कशकृत्स्नसुधायुगकर्णकपर्णकशीतकलेखाभ्रुशलाथलपिष्टसुपिष्टमसूरकर्णकठे-रणपतञ्जलिभ्यः ॥ ४. १. १९४ ॥

तिककितवोऽब्जककुभवङ्खरभण्डीरथप्रहितनरकाग्निवेशदा[1]सेरकबकनख[2]श्वगुद-परिणद्धलङ्कशान्तमुखोरसलङ्कटेभ्यो द्वन्द्वे ॥ ४. १. १९५ ॥

षड्भ्यश्चोपकादिभ्यः[3] ॥ ४. १. १९६ ॥

न गोपवनादिभ्योऽष्टभ्यः ॥ ४. १. १९७ ॥

प्रा[4]ग्जितीयेऽचि[5] ॥ ४. १. १९८ ॥

गोत्राल्लुक् ॥ ४. १. १९९ ॥

फक्फिञोर्वा ॥ ४. १. २०० ॥

अब्राह्मणात् ॥ ४. १. २०१ ॥

पैलसालङ्किसात्यकिसात्यङ्काम्यौदज्यौदमञ्ज्यौदमेघ्यौदशुद्धिदैवस्थानपैङ्गलादा-यनिराणिराहक्षितिभौलिङ्ग्योद्राहमान्यौज्जिहानिभ्यः ॥ ४. १. २०२ ॥

जनपदनाम्नः क्षत्रियादणः ॥ ४. १. २०३ ॥

मगधकलिङ्गशूरमसकुरुवृष्णयन्धकेभ्यश्च ॥ ४. १. २०४ ॥

[6]प्रैच्यादिञः ॥ ४. १. २०५ ॥

न तौल्वलि[7]वारणिधारणिरावणिदैलीपिदैवतिदैवमतिदैवयज्ञिप्राग्दोहनिचा[8]र्फन्द-ष्यासुरिपौष्करसाद्यानुराहतीभ्यः ॥ ४. १. २०६ ॥

आनुतिनैमिश्यासिबन्धकिचैङ्किपैष्ट्याहिंसिपैरकिपैसीतिवैकर्णिकार्करिकारेणु-पालिभ्यः ॥ ४. १. २०७ ॥

भ[9]रतगोत्राच्च ॥ ४. १. २०८ ॥

१. A. नशेरक

२. A. नखगद

३. A adds as a separate sūtra वाभ्याष्टयेष्टकादिभ्याम्

४. A adds गर्गभार्गविका

५. A adds गोर्गे भार्गविका

६. A. This sūtra is read along with the previous.

७. A omits वारणि

८. A. फट्ट

९. A. भरतो

ञिदार्षण्येभ्योऽणिञोः ॥ ४. १. २१० ॥
द्व्येकयोः बहुषु लोपिनो बहुषु लुकि लुक् ॥ ४. १. २११ ॥
बहुषु द्व्येकयोरलुक् ॥ ४. १. २१२ ॥

इति श्री सरस्वतीकण्ठाभरणनाम्नि व्याकरणे
चतुर्थस्याध्यायस्य प्रथमः पादः
समाप्तः

---

१. A. ङि-  २. A. द्व्येकयोरलुक्.

# अथ द्वितीयः पादः

---

तेन रक्तं रागात् ॥ ४. २. १ ॥

लाक्षारोचनाभ्यां ठक् ॥ ४. २. २ ॥

शकलकर्दमाभ्यां वा ॥ ४. २. ३ ॥

नीलपीताभ्यां मन्कनौ ॥ ४. २. ४ ॥

पीतकाल्लुक् ॥ ४. २. ५ ॥

हरिद्रामहारजनाभ्यामञ् ॥ ४. २. ६ ॥

चन्द्रवृत्तेर्नक्षत्राद्युक्तः कालः ॥ ४. २. ७ ॥

लुबविशेषे[1] ॥ ४. २. ८ ॥

संज्ञायां श्रवणाश्वत्थाभ्याम् ॥ ४. २. ९ ॥

द्वन्द्वाच्छः[2] ॥ ४. २. १० ॥

दृष्टं साम डिद्वा ॥ ४. २. ११ ॥

वामदेवात् ड्यड्ड्यौ ॥ ४. २. १२ ॥

गोत्रादङ्कवत् ॥ ४. २. १३ ॥

परिवृतो रथः ॥ ४. २. १४ ॥

पाण्डुकम्बलादिनिः ॥ ४. २. १५ ॥

द्वैपवैयाघ्राभ्यां चर्मभ्यामञ् ॥ ४. २. १६ ॥

कुमारात् प्राथम्ये ॥ ४. २. १७ ॥

तत्रोद्धृतं पात्रेभ्यः ॥ ४. २. १८ ॥

स्थण्डिलात् शेते व्रती ॥ ४. २. १९ ॥

संस्कृतं[3] भक्ष्यम् ॥ ४. २. २० ॥

शूलोखाभ्यां यत् ॥ ४. २. २१ ॥

१. A adds संज्ञायां and omits this word in the next sūtra.

२. A. This is read along with the previous sūtra.

३. A. This is read along with the previous sūtra.

दध्नष्ठक् ॥ ४. २. २२ ॥

उदश्वितो वा ॥ ४. २. २३ ॥

क्षीराड्ढञ् ॥ ४. २. २४ ॥

सास्मिन् पौर्णमासी संज्ञायाम् ॥ ४. २. २५ ॥

अश्वत्थाग्रहायणीभ्यां ठक् ॥ ४. २. २६ ॥

फाल्गुनीश्र[१]वणकार्तिकीचैत्रीभ्यो वा ॥ ४. २. २७ ॥

सास्य देवता ॥ ४. २. २८ ॥

कस्ये[२]च्च ॥ ४. २. २९ ॥

शुक्राद्घन् ॥ ४. २. ३० ॥

पैङ्गा[३]क्षीपुत्रादिभ्यश्छः ॥ ४. २. ३१ ॥

शतरुद्रात् घश्च ॥ ४. २. ३२ ॥

अपोनपादपान्नपातोस्तृ चातः ॥ ४. २. ३३ ॥

महेन्द्राद्वा ॥ ४. २. ३४. ॥

सोमात् ट्यण् ॥ ४. २. ३५ ॥

वाय्वृतुपित्रुषसो यत् ॥ ४. २. ३६ ॥

द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छश्च ॥ ४. २. ३७ ॥

कालेभ्यो भववत् ॥ ४. २. ३८ ॥

महाराजप्रोष्ठपदाभ्यां ठञ् ॥ ४. २. ३९ ॥

आदेश्छन्दसः प्रगाथे ॥ ४. २. ४० ॥

यो[४]द्धृप्रयोजनेभ्यः संग्रामे ॥ ४. २. ४१ ॥

प्रहरणादस्यां क्रीडायां णः ॥ ४. २. ४२ ॥

भावघञो ञः ॥ ४. २. ४३ ॥

तदधीते तद्वेद ॥ ४. २. ४४ ॥

क्र[५]तुभ्यष्ठक् ॥ ४. २. ४५ ॥

वृत्तिसंग्रहायुर्वेदगुणगणानुपदद्विपदज्योतिषगणितानुसूर्लक्ष्यलक्षणेभ्यः ॥ ४. २. ४६ ॥

१. A. श्रवणा

२. A. This sūtra is read along with the previous.

३. A. पैङ्गिकिषी-

४. A. This is read along with the previous sūtra.

५. A. This is read along with the previous sūtra.

वसन्तवर्षाशरद्धेमन्तशिशिरप्रथमचरमानुगुणकल्पाथर्वणेतिहासपुराणेभ्यः ॥ ४. २. ४७ ॥

आख्यानाख्यायिकाभ्यः[1] ॥ ४. २. ४८ ॥

लक्षणकल्पसूत्रान्तादकल्पादेः ॥ ४. २. ४९ ॥

विद्यान्तादनङ्गक्षत्रधर्मत्रिपूर्वात् ॥ ४. २. ५० ॥

पदोत्तरपदात् ठन्[2] ॥ ४. २. ५१ ॥

शतषष्ठ्यादेः पथः ष्ठन् ॥ ४. २. ५२ ॥

अनुब्राह्मणादिनिः ॥ ४. २. ५३ ॥

क्रमपदशिक्षामीमांसासामभ्यो वुन् ॥ ४. २. ५४ ॥

सर्वसादेर्लुक् ॥ ४. २. ५५ ॥

प्रोक्तात् ॥ ४. २. ५६ ॥

संख्याकनः सूत्रवचनात् ॥ ४. २. ५७ ॥

तस्य समूहः ॥ ४. २. ५८ ॥

भिक्षाक्षेत्रकरीषगर्भिणीदक्षिणाङ्गारसहस्राथर्वश्वर्मन्युवतिपदातिपद्धतिभ्योऽण्॥ ४. २. ५९ ॥

खण्डिकाहन्हलबन्धयुगवस्त्र[3]वडवाभिक्षुकशुकोलूकश्वानुदात्तादेरञ् ॥ ४.२.६०॥

क्षुद्रकमालवात्[4] सेनायाम् ॥ ४. २. ६१ ॥

गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजवृद्धेभ्यो वुञ् ॥ ४. २. ६२ ॥

केदाराद्यञ्च ॥ ४. २. ६३ ॥

कवचिनश्च ठञ् ॥ ४. २. ६४ ॥

हस्त्यचित्तेभ्यष्ठक् ॥ ४. २. ६५ ॥

धेनोरनञः ॥ ४. २. ६६ ॥

गणिकाब्राह्मणमाणवबाडवेभ्यो यञ् ॥ ४. २. ६७ ॥

केशाद्वा ॥ ४. २. ६८ ॥

अश्वाच्छः ॥ ४. २. ६९ ॥

पर्शुपुरुषाभ्यां णढञौ ॥ ४. २. ७० ॥

अह्नः खः क्रतौ ॥ ४. २. ७१ ॥

पृष्ठाद्यः ॥ ४. २. ७२ ॥

१. A. कार्थेभ्यः

२. A. ठक्

३. A. वधबा

४. A. क्षत्रकमलवात्सेनायाम्.

५. C. This is written as part of the commentary.

